॥ श्रीः ॥

# न्यायकुसुमाञ्जलिः

न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः ।

महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासित-
महामहोपाध्यायवर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः

# NYÂYA KUSUMÂNJALI,

BY

NYÂYÂCHÂRYA SRI UDAYANÂCHÂRYA,

With the Commentary of Mahâmahopâdhyâya Varddhamanopâdhyáya,

And the Gloss

of Mahâmahopâdhyâya Ruchi datta,

Edited by

Pandit Laxman Shastri Dravid

Professor, Government sanskrit College, Calcutta.

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.
BENARES CITY:
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

1912

॥ श्रीः ॥

# न्यायकुसुमाञ्जलिः

न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः ।

महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासित-
महामहोपाध्यायवर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः

# NYÂYA KUSUMÂNJALI,

BY

NYÂYÂCHÂRYA SRI UDAYANÂCHÂRYA,
With the Commentary of Mahâmaho-
pâdhyâya Varddhamânopâdhyáya,
And the Gloss
of Mahâmahopâdhyâya Ruchi datta,
Edited by
Pandit Laxman Shastri Dravid
Professor, Government sanskrit College, Calcutta.

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.
BENARES CITY:
*...d by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

1912

न्यायकुसुमाञ्जलिग्रन्थस्य ।

# भूमिका ।



अहोधन्योऽस्तिसर्वनियंतासच्चिदानन्दघनः परमात्मासाक्षीचेताकेवलोनिर्गुणश्च सर्वपरिच्छेदवर्जितः पूर्णः स्वयंज्योतिः सर्वगन्धः सर्वरसः सर्वकर्त्ता स्वमाययाविवर्तभूतः सर्वप्रपञ्चोत्पादकः स्थितिकर्त्तासंहारकर्त्ताचाभिन्ननिमित्तोपादानकारणोलूतातन्तुरिव स्वप्नवच्च योगीवत्स्वेच्छयामायावीवासङ्कल्पयेनच सर्वमुमुक्षूपचिकीर्षया महर्षिद्वारानानाविधानिशास्त्राणिवेदावेदाङ्गाश्चेतिहासपुराणादीनिप्रकाशितानि तेषु च आत्मावारेश्रोतव्योमंतव्येति श्रुतिस्मृतिसूत्रभाष्यानुसारार्थकतयामुमुक्षुबुद्धिवैशद्यार्थंतर्कशास्त्रं गौतमकणाद द्वारा प्रकाशितं शरीरादिभ्योभिन्नश्चात्मा ईश्वरश्चास्ति सर्वशक्तिमान् सर्वफलदाताचेत्यनुमानेनसाधितो नास्तिकपक्षनिरासायपरलोकसाधनभूतधर्माधर्मनिर्णयायचोद्देश्यलक्षणपरीक्षाद्वारापदार्थसाधर्म्यवैधर्म्य द्वाराच्चनिःश्रेयसाधिगमाय प्रमाणादयोऽर्थावात्स्यायनमहर्षिभिर्द्वाराप्रकाशिताः इत्यन्तं, तथाहि प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् । प्रमाणमन्तरेणनार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेनखल्वयंज्ञाता,ऽर्थमुपलभ्यतमर्थमभी प्सतिजिहासतिच । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः । समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जिहाति वा । अर्थस्तुसुखंसुखहेतुर्दुःखहेतुश्च सोयं प्रमाणार्थः प्राणभृद्भेदस्योपाधिनाऽपरिसख्यत्वाद परिसंख्येयः । अर्थवति चप्रमाणे प्रमाताऽन्तः करणावच्छिन्नः प्रमेव प्रमितिरित्यर्थवन्ति भवन्ति, तस्मादन्यतमापायेऽर्थ-

स्यानुपपत्तेश्च तत्रयस्येप्साप्रयुक्तस्य प्रवृत्तिः, सप्रमाता चिद्रूपः। सयेनार्थं प्रमिणोति तत्प्रमाणं, प्रमायाः करणञ्चक्षुरादयः चक्षुराद्यवच्छिन्न चैतन्येन योऽर्थः प्रमीयते तत्प्रमेयं यथार्थज्ञानविषयंपरमार्थ तोमिथ्याभूतमपि स्थूलाविचारिणां सत्यवद्भाति व्यावहारिकसत्यं प्रातीतिकंवा इतिवेदान्ते अत्रापितदेवार्थो गौतमाभिप्रेतः, तथा चोक्तं तद्विद्यैश्च सहसंयोगःइति सोपानारोहणन्यायेन सहकारितामेव निर्विशेषशुद्धसच्चिदानन्दस्वरूपब्रह्म वादिनोभजन्तेसर्वे । ननुकथंसर्वेषांदर्शनानां निर्विशेषाद्वैतवादसहकारित्वं परस्पराविरुद्धत्वात् इतिचेदित्थं तथाहि बन्धस्याज्ञानकार्यत्वंज्ञानैकनिवर्त्यत्वञ्चेत्ययमेवार्थः परमसिद्धान्तत्वेन प्रतिपिपादयिषितोवेदान्तानां सर्वोपानिषदां सचसाक्षात्परम्परयावातदानुगुण्येन सर्वतीर्थकराणांमहर्षीणामभिप्रेत एवेतिसुस्पष्ट मेवावगम्यते, यथाह भगवानक्षपादाचार्य्यः सू० २ दुःखजन्मप्रवृत्तिदोषमिथ्याऽज्ञानाना मुत्तरोत्तराऽपाये तद नन्तरापायादपवर्गः इति । दुःखादिषुपूर्वपूर्वस्योत्तरोत्तर कार्यत्वान्मिथ्याऽज्ञानस्य संसारहेतुत्वं,तन्नाशे,(विवेकेनबाधे,) संसारबाध इति तुल्यमन्यत्राभिनिवेशात् । दोषनिमित्तस्यमिथ्याऽज्ञानस्य स्वरूपं सएवाह दोषनिमित्तंरूपादयोविषयाः सङ्कल्पकृता इति । तन्निमित्तंत्ववयव्यभिमान इति च, तन्नाशोपायमित्थं पुनरसूत्रयत् मिथ्योपलब्धेर्विनाशस्तत्वज्ञानात्स्वप्नविषयोपलब्धि प्रणाशवत्प्रबोध इति, अत्ररूपादिविषयोपस्थापन द्वारा दोषादिजनकस्य सङ्कल्परूप मिथ्याज्ञानस्य निःसङ्कल्पतालक्षणेन ब्रह्मात्मैक्यज्ञानेनवा, तत्वज्ञानेननिवृत्तिर्बोध्यतेनिवृत्तिर्नाम ब्रह्मभिन्नस्यत्रैकालिकात्यन्ताभावनिश्चयलक्षणोबाधःइत्यभिप्रेतोस्ति तत्त्वदृशामिति।एवङ्कणभक्षपक्षेपिसवासनंमिथ्याऽज्ञानं संसारमूलं

दग्धेन्धनानलवत्तदुपशमो मोक्ष इति चतुर्ल्यमेव सर्वेषांदर्शनानां वेदान्तसहकारित्वं वेदान्तस्यसर्वश्रेष्ठत्वं तथा चोक्तमुदयनाचार्येण। आत्म तत्वविवेके विज्ञानवादि दूषणोपसंहारे ॥ नग्राह्यभेदमवधूयधियोस्तिवृत्ति स्तद्बाधकेबलिनिवेदनयेजयश्रीः। नोचेदानिन्द्यमिदमीदृशमेवविश्वं तथ्यं तथागतमतस्य तु कोऽवकाश इति, अस्यार्थः। ग्राह्यभेदं घटादि बाह्यार्थं तिरस्कृत्यघटादिरूपाकाराभिन्न रूपेण ज्ञानस्यवृत्तिः ( संबंधः )कापिनास्तितद्बाधके घटादिबहिरर्थबाधकेऽद्वैत ब्रह्मरूपाधिष्ठानसाक्षात्कारे जातेतु बलिनि,सर्वेभ्योद्वैतवादिभ्योबलवति,(वेदनयेवेदान्तदर्शने )जयश्रीर्जयोत्कर्षकाष्ठा। बौद्धमतापेक्षया तार्किकमतेजयस्तदपेक्षयासांख्यमते जयस्तन्मते आत्मनोऽसङ्गत्वादिस्वीकारात्, तदपेक्षयापि वैदिकमतेयतो द्वैतमिथ्यात्वादिस्वीकारात्। अतोजयोत्कर्षकाष्ठा, यदितु निष्कामकर्माननुष्ठानाच्चित्तं नशुद्धं, तदा वेदान्तश्रवणादौ सत्यपितादृशसाक्षात्काराऽभावेन विश्वमनित्यतया प्रतीयमानमपि तथ्यमेवमनुतेऽविवेकीव्यावहारिकसत्यत्वात्, तत्रापाततस्तार्किकादिभिर्विश्वं ब्रह्मवत् परमार्थ सत्यमिति वक्तुं शक्यं,तथागतस्यतु बौद्धस्यतुमतस्य ज्ञानादत्यन्तभिन्नं जगदलीकमित्येवरूपस्य कोऽवकाश इति भावः। एवंपरमाणु भेदादिसत्यत्वेपि नतात्पर्यम्। यदर्थविज्ञानं सा प्रमितिः। चतसृषुचैवं विधास्वर्थतत्वं समाप्यतेऽन्वेषाम्प्रमाणानामेष्वेवान्तर्भावः। किंपुन स्तत्त्वंतदाह सतश्च सद्भावोऽसतश्चाऽसद्भावः। सत्सदिति गृह्यमाणंयथा भूतमविपरीतं तत्वं भवति। अस दसदितिगृह्यमाणमयथा भूतं विपरीतंमिथ्याभूतं तत्वं भवति, कथमुत्तरस्य प्रमाणेणोपलब्धिरिति सत्यप्युपलभ्यमाने, तदनुपलब्धेः,प्रदीपवत् यथा दर्शकेनदीपेन दृश्ये गृह्यमाणे, तदिवयन्न गृह्यते तन्नास्ति-

यद्यभविष्यदिदमिदं व्यज्ञास्यत विज्ञानाभावान्नास्तीति । एवं प्रमाणेन सतिगृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति, तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति । सच्च खलु न्यायमते प्राचीनतमैषोडशधाव्यूढमुपदिश्यते तासां खल्वासां सद्विधानान्तत्वज्ञाने ऽपवर्गोन्यायमते तथाहि प्रमाणप्रमेयसंशय प्रयोजनदृष्टान्त सिद्धान्तावयवतर्कनिर्णय वादजल्पवितंडाहेत्वाभासच्छलजाति निग्रहस्थानानां तत्वज्ञानान्निः श्रेयसाधिगमः।इति । एतावंतोविद्यमानार्थाव्यावहारिकाः। विचारकाणामितिएषामविपरीत ज्ञानार्थमिहोपदेशः । सोऽयमनवयवेनतन्त्रार्थ उद्दिष्टोवेदितव्यः । आत्मादेः प्रमेयस्यद्वादशविधस्य तत्वज्ञानान्निः श्रेयसाधिगमोन्यायशास्त्रे । हेयं तस्य निवर्त्तकं हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानिचत्वार्य्यर्थ पदानिसम्यग् बुध्वा तत्तच्छास्त्रेभ्यस्तद्गुरुसङ्गेन परम्परयासाक्षाद्वानिःश्रेयसमधिगच्छतिमुख्यं परमार्थमोक्षस्तुसर्वदुःखनिवृत्तिःपरमानन्दावाप्तिश्चेतिसुस्पष्टं तत्र संशयादीनां पृथग् वचनमनर्थकं संशयादयो यथा सम्भवं वेदान्ते प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्ते तथापि स्थूलदृष्ट्यापृथगुक्ताः । इमास्तुचतस्रोस्पष्टमेवविद्याःपृथक् प्रस्थानाःप्राणभृतामनुग्रहाय परंपरयोपदिश्यन्ते यासाश्चतुर्थीयमान्विक्षिकीन्यायविद्या,तस्याः पृथक् प्रस्थानाः संशयादयः पदार्थाः । तेषां पृथग् वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्याद् यथोपनिषद्ब्रह्मविद्या इति । तस्मात्संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते तत्र नानुपलब्धेरर्थो निर्णीयतेऽर्थेन्यायः प्रवर्तते एतेन तर्कोनस्वतन्त्रप्रमाणमिति ध्वनितं, तत्वज्ञानदृढीकरणार्थम् । स एवन्यायः संशयितेर्थे प्रवर्तते यथोक्तं विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति

विमर्शः संशयः । पक्षप्रतिपक्षौन्यायवृत्तिः । अर्थावधारणं निर्णयस्तत्त्वज्ञानमिति सचायं किं स्विदितिवस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः । प्रमेयेभवन्नेवमर्थं पृथगुच्यते स्पष्टार्थम् । प्रयोजनन्तु येन प्रयुक्तः प्रवर्तते तत् प्रयोजनम् । यमर्थमभिप्सन् जिहासन् वा कर्मारभते तेनानेन सर्वेप्राणिनः सर्वाणिकर्माणि सर्वाश्चविद्याव्याप्ताः तदाश्रयश्चन्यायः प्रवर्तते। कः पुनरयं न्यायः । प्रमाणैरर्थपरीक्षणं न्यायः प्रत्यक्षागमाश्रित मनुमानं सान्वीक्षा प्रत्यक्षागमाभ्यामी क्षितस्यान्वीक्षणमन्वक्षिा तयाप्रवर्तत इत्यान्वीक्षिकी न्याय विद्या, न्यायशास्त्रम् । यत्पुनरनुमानं प्रत्यक्षागम विरुद्धं तन्न्यायाभासः स इति तत्रवादजल्पौ सप्रयोजनौ वितंडात् परीक्ष्यते, वितण्डया प्रवर्तमानो वैतण्डिको यथा वैतण्डकोपि ब्रह्माद्वैतंस्थायुकोहर्षमिश्रः परमार्थतत्ववित्पाण्डितोपि वैतण्डिकवेदविरुद्धजल्पक गर्वमर्दनायेति । स प्रयोजन मनुयुक्तोयदि प्रतिपद्यतेसोऽस्यपक्षः सोऽस्यसिद्धान्तइतिवैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते । नायं लौकिकोन परीक्षक इत्या पद्यते, अथापिपरपक्षंप्रतिषेधकंप्रयोजनं ब्रवीति एतदपितादृगेव । यो ज्ञापयति योजानाति यच्चज्ञाप्यते एतच्चप्रतिपद्यते पर पक्ष प्रतिषेधज्ञापनं प्रयोजन मित्येतदस्य वाक्यमनर्थकं भवति । स्ववाक्यपर पक्षस्थापनाहीनो वितण्डा । तस्य यद्याभिधेयंप्रतिपद्यते सोऽस्यपक्षः स्थापनीयो भवति । अथ न प्रति पद्यते प्रलापमात्र मनर्थकंभवति वितण्डात्वं, निवर्तते, दृष्टान्तः-प्रत्यक्षविषयार्थः, यत्रलौकिक परीक्षकाणां दर्शनंनव्याहन्यते तत्प्रमेयं तस्यपृथग्वचनञ्च तदाश्रयावनुमाना गमौ ॥ तस्मिन् सतिस्यातामनु माना ग-

भावसति चनस्याताम् । तदाश्रयाचन्यायप्रवृत्तिः । दृष्टान्ताऽविरोधेन चपरपक्ष प्रतिषेधो वचनीयोभवति । दृष्टान्त समाधिनाचसपक्षः साधनीयोभवति, नास्तिकश्चदृष्टान्तमभ्युपगच्छ न्नास्तिकत्वंजहाति । अनभ्युपगच्छन्किंसा धयेत्परमुपालभेतेति, निरुक्तेन दृष्टान्तेनशक्यमभिधातुम् । साध्य साधर्म्यात् । तद्धर्मभावीदृष्टान्त उदाहरणंतद्विपरीताद्विपरीतमिति अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः । सचप्रमेयं तस्यपृथग्वचनम् । सत्सुसिद्धान्तभेदेषुवादजल्प वितण्डाः प्रवर्तन्ते नातोऽन्यथेतिसाधनीयार्थोभवति शब्दसमूहे सिद्धिः परिसमाप्येततस्यपञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते तेषुप्रमाणसमतायै आगमः प्रतिज्ञाहेतुरनु मानम् । उदाहरणं प्रत्यक्षम् । उपनयनमुपमानं सर्वेषामेकार्थसमवायेसामर्थ्य प्रदर्शनं निगमनमिति सोऽयंपरमोन्याय इति एतेन वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति तदा श्रया च तत्वव्यवस्था तएतेऽवयवाः शब्द विशेषाः सन्तः, प्रमेयेऽन्तर्भूता एवमर्थाः पृथगुच्यन्त इतितर्कोन प्रमाण संगृहीतो नप्रमाणान्तरं प्रमाणानामनुग्राह कस्तत्वज्ञानायकल्पते तस्योदाहणं किमिदंजन्मकृतकेनहेतुनानिर्वर्त्यते आहोस्विदकृतकेन अथाकस्मिकमिति एवमविज्ञातेऽर्थेकारणोपपत्या ऊहः प्रवर्तते यदि कृतकेनहेतुनानिवर्त्यतेहेतूच्छेदस्याशक्यत्वादनुपपन्नोयं जन्मोच्छेदः । अथा ऽकृतकेनहेतुनाततोहेतूच्छेदस्याशक्यत्वादनुपपन्नेदं जन्मोच्यते । अथाकास्मिकमतोऽकस्मान्निवर्त्यमानं नपुनर्निर्वत्यार्थस्य प्रतीति निवृत्तिकारणंनोपपद्यते तेन जन्मातुच्छेद इति । एतँस्मिस्तर्कविषयेकर्मनिमित्तजन्मेति प्रमाणानि वर्तमानानितर्काणामनुगृह्णन्तेतत्व ज्ञानविषयस्वावभागात्तत्वज्ञानायकल्पतेतर्क इति ।

सोयमित्थंभूतस्तर्कः प्रमाणसहितो वादे ( तत्व बुभुत्सुकथारूपे) साधनायोपालम्भायवार्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोपीति। निर्णयस्तत्वज्ञानं प्रमाणानां फलन्तदवसानोवादः तस्य रक्षणार्थं जल्पवितण्डेतावेतौतर्कनिर्णयौ लोकयात्रां वहत इति सोयंनिर्णयः प्रमेयान्तर्भूत एवमर्थं पृथ गुद्दिष्ट इति वादः खलु नानाप्रवक्तृकः प्रत्यधिकरण साधनोऽन्यतराधिकरणनिर्णयावसानोवाक्यसमूहः पृथगुद्दिष्ट उपलक्षणार्थम् । उपलक्षितेन व्यवहारस्तत्वज्ञानायभवतीतितद्विशेषौजल्पवितण्डे तत्वाध्यवसाय संरक्षणार्थमित्युक्तम् । निग्रहस्थानेभ्यः पृथ गुद्दिष्टाहेत्वाभासा वादे चोदनीया भविष्यन्तीति। तेषांद्वाविं शतिर्भेदाः। जल्पवितण्डयोस्तु निग्रहस्थानानीति, छलजातिनिग्रहस्थानानां पृथ गुपदेश उपलक्षणार्थः । उपलक्षितास्ववाक्येपरिवर्जनं । छलजातिनिग्रहाणाम्परवाक्येपर्यनुयोगः। जातिश्चचतु र्विंशतिः। असदुत्तरं जातिः समानप्रसवावा। जातेश्चपरेण प्रयुज्यमानायाः सुलभः समाधिः स्वयश्चसुकरः प्रयोग इति। सेयमान्वीक्षिकीप्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्वविद्याना मुपायः सर्वकर्मणाम् । आश्रयः सर्व धर्माणांविद्योद्देशेप्रकीर्तिता,तदिदंतत्वज्ञानंनिः श्रेयसाधिगमार्थं यथाविद्यंतत्तद्गुरुभ्यो वेदितव्यम् । नवीतमतेद्रव्यगुणकर्म सामान्यविशेष समवायाभावाख्याः सप्तपदार्थाः पदार्थसाधर्म्य वैधर्म्य लक्षण परीक्षोद्देशद्वारानिरूपितामोक्षज्ञानायपरंपरया इति पृथिव्यादयोनव द्रव्याणि रूपादयोगुणाश्चतुर्विंशतिः । उत्क्षेपणादीनि पंचकर्माणिपरम परंच द्विविधं सामान्यंपरंसत्ता अपरंजातिः विशेषा स्त्वनंताः॥ सर्वनिर्वाहकाः नित्यसंबधः समवायस्त्वेकः संयोगादयो पिवोध्याः॥ प्राग-

भावादि भेदेनाभवाश्चतुर्विधाः। एवं सर्व न्यायरहस्य भूतोमतम तान्तरसहितो न्यायकुसमाञ्जलिनाम ग्रंथोहिपरमरमणीयोस्ति पद-वाक्यप्रमाण पारावारीण परमार्थ तत्त्वविद् उदयना चार्य वर्य-विरचितः सर्वजनोप कारायसर्वो परिवरीवर्त्ति। तेनैवोक्ताः कुसुमाञ्जलौमत भेदाः स्वच्छतयावर्तन्ते तथाहि इहयद्यपि यंकम-पि पुरुषार्थमर्थयमानाः शुद्धबुद्धस्वभावा इत्यौपानिषदाः। आ-दि विद्वान् सिद्धइति, कापिलाः, क्लेशकर्मविपाका शयैरपरामृष्टो, निर्वाण कायमधिष्ठायसंप्रदाय प्रद्योतकोऽनुग्राहकश्चेतिपातञ्जलाः लोकवेद विरुद्धैरपिनिर्लेपः स्वतंत्रश्चेतिमहापाशुपताः, शिवइति शैवाः, पुरुषोत्तम इतिवैष्णवाः। पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, निरावरण इति दिगम्बराः। उपास्यत्वेन देशितइति मीमांसकाः। परमाणुसत्यवादिन इतिनैयायिकाः लोक-व्यवहारसिद्धइति चार्वाकाः, किंवहुना कारवोपियमपि किंश्च कर्मेत्यु पासंते तस्मिन्नैवजाति गोत्रप्रवर चरण कुलधर्मा दिवोदास सारं प्रसिद्धा नुभावेभगवति संदेह एवकुतः १ किं निरूपणीयमिति श्रुतोहि भगवान् वहुशः श्रुति स्मृती तिहास पुराणेष्विदानीं मन्तव्यो भवाति श्रोतव्योमन्तव्य इति श्रुतेरिति ॥ सोयं कु-सुमाञ्जलिग्रंथः प्रकाशमकरंद्रव्याख्यायुतो नाद्यापि मुद्रितः सोयं परमपारिश्रमेण हरिदास श्रेष्ठि गुप्तात्मजेनजय कृष्ण दासेन निज विद्याविलाससीरीजयंत्रा लयेमुद्रापयित्वा सर्वजन सौल-भ्यार्थं प्रकाशितोस्ति तस्मात्त्वरयन्तु न्याय शास्त्ररसिका अपूर्व ग्रंथप्राप्तयेति शमा शासे

सर्वमुमुक्षुहितैषी
प्रज्ञानानन्द सरस्वती स्वामी
कैवल्यधामनिवासी
ब्रह्माघाट बनारस।

कुसुमाञ्जलिप्रकरणीयकारिकानामकारादिक्रमेण

# प्रतीकसूची

इति कुसुमाञ्जलिकारिकासूची समाप्तिमगमत् ॥

---

श्रीशिवः शरणम् ।

## न्यायकुसुमाञ्जलिप्रकरणस्य प्रस्तावक्रमेण

## विषयसूची ।

### प्रथमस्तबके ।

## द्वितीयस्तबके।

## तृतीयस्तबके ।



## चतुर्थस्तबके ।

पञ्चमस्तबके।



इतिकुसुमाञ्जलिप्रकरणसूची समाप्ता।

---

## कुसुमाञ्जलि-प्रकाशस्य सन्दर्भानुसारेण-विषयसूची।

### प्रथमस्तबके।

## द्वितीयस्तबके ।

तृतीयस्तबके ।



चतुर्थस्तबके ।



पञ्चमस्तबके ।



इति कुसुमाञ्जलिप्रकाशगतविषयसूची समाप्ता ।

मकरन्दस्य ग्रन्थक्रमानुसारेण

विषयसूची ।

प्रथम स्तबके ।

द्वितीयस्तबके ।



तृतीयस्तबके ।



चतुर्थस्तबके ।



पञ्चमस्तबके ।



इति कुसुमाञ्जलिप्रकाशमकरन्दगतविषयसूची समाप्ता ।

प्रकाशसहितन्यायकुसुमाञ्जलिग्रन्थशुद्ध्यशुद्धीनां

# सूचीपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
| --- | --- | --- | --- |
| बहुलवच्चनाद्वा | बहुलवचनाद्वा | ४ | २४ |
| मनने श्रद्धा | मनने ऽश्रद्धा | ० | ४ |
| जन्यस्वविषयक | जन्यजन्यस्वविषयक | ११ | ६ |
| व्याप्यकालसम्बन्धित्वं | व्याप्यकालासम्बान्धित्वं | १४ | १६ |
| मुपादेत्त | मुपादत्ते | १८ | ३० |
| युक्त, कारणगत्तैक | युक्तंकारणगतैक | २७ | २७ |
| लामादिहेतुत्त्वे | लाभादिहेतुत्वे | ३६ | २४ |
| सहकारि | सहकारि | ४१ | २७ |
| सहानस्थान | सहानवस्थान | ४४ | २३ |
| विशेषाणा | विशेषणा | ,, | ६ |
| प्रागाभावादि | प्रागभावादि | ४९ | ६ |
| मपूर्वणेत्यर्थः | मपूर्वेणेत्यर्थः | ६७ | ९ |
| तदुपग्रहणे | तदुपग्रहेण | ,, | १ |
| भिमानाव्या | भिमानव्या | ७० | १ |
| तद्धर्मिभेद | तद्धर्मिभेद | ८५ | २५ |
| यतिरका | व्यतिरेक | ८९ | ६ |
| प्रामाप्रम | प्रमाप्रम | ७ | १ |
| ऽप्रमाण्य | ऽप्रामाण्य | ७ | १० |
| दशायमिति | दशायामिति | ९ | १८ |
| हेतुर्वि | हेतुर्वि | ९ | २३ |
| व्यघातात् | व्याघातात् | १४ | १ |
| तत्प्रमाण्य | तत्प्रामाण्य | १४ | ७ |

| | | | |
|---|---|---|---|
| प्रमाण्या | प्रामाण्या | १४ | ११ |
| " | " | " | २४ |
| तत्प्रमाण्यस्या | तत्प्रामाण्यस्या | " | २९ |
| परस्यरादि | परस्परादि | २९ | १ |
| गकास्य | गकारस्य | ३६ | ३१ |
| देर्वादेव | दर्वागेव | ४२ | १९ |
| देवाधि | वेदाधिक | ५० | १ |
| मापोह्वा | मावापोह्वा | ५५ | २८ |
| नतिक्रमणेति | नतिक्रमेणेति | ५७ | २४ |
| वृत्तिः | प्रवृत्तिः | १८ | २४ |
| कार्यात्मनौ | कार्यात्मानौ | २२ | २ |
| नोपलम्भाय | नोपालम्भाय | २१ | ७ |
| उपधेय | उपाधेय | ५१ | ३ |
| गोः | गौः | ५० | १५ |
| नच | नहि | ५५ | २३ |
| व्यपारवत्त्व | व्यापारवत्त्वं वा | ७४ | २२ |
| तद्वाधिका | तद्बोधिका | ९६ | १७ |
| निधि | विधि | १३६ | १९ |

इति शुद्ध्यशुद्धिपत्रं समाप्तम् ।

श्रीगणेशाय नमः ।

# न्यायकुसुमाञ्जलिः ।

महामहोपाध्यायश्रीमदुदयनाचार्यविरचितः ।

विद्वद्वरश्रीवर्द्धमानप्रणीतप्रकाशसहितः ।

## प्रथमः स्तबकः ।

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ॥
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥ १ ॥

ॐ नमो गणेशाय ॥

भक्तानां कामदस्तुष्टो रुषा कामं दहन्नपि ॥
अपि ज्ञानमयः स्थाणुर्यस्तमीशं स्तुवीमहि ॥ १ ॥
यतः प्रकाशते ज्योतिरपि वाचामगोचरः ॥
कायेन मनसा वाचा परां वाचं नमामि ताम् ॥ २ ॥
न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने ।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः ॥ ३ ॥

सदाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितप्रतिबन्धक-विघ्नविघातकमिष्टदेवताकीर्त्तनरूपं सच्छब्दप्रयोगरूपञ्च मङ्गलमाच-रन्नेव प्रयोजनाभिधेयसम्बन्धानाह ॥ सत्पक्षेति ॥ एषोऽनघो वाक्य-दोषरहितः । विषयाशुद्धेः पूर्वार्द्धेनैव निरासात् । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः समस्तरूपोपपन्नलिङ्गबोधकवाक्य-जातम् । स एवाह्लादकतया प्रसूनम् । तदेवाऽवान्तरवाक्यघटितत्वेन अञ्जलिः । मम चेतः, अविघ्नं यथा स्यादेवं रमयतु दुःखसामग्रीहीनं करोतु । ईशस्य पदयुगे रमयतु तदेकाग्रं करोत्विति वा । मनः कीदृ-

शाम् ? ॥ भृङ्गायमाणम् ॥ भृङ्ग इव मकरन्दे संसारिणां दुःखविगमोपाये सतृष्णम् ॥ भ्रमद् अनुसरत् ॥ दुःखविगमोपायम् इत्यर्थात् । तत्र सतृष्णस्य तदन्यानुसरणानौचित्यात् । तत्साधनानुसरणस्यापि तदर्थतया तदनुसरणरूपत्वात् । परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानोच्छेदे तृष्णा भवत्येवेत्यनुभवसिद्धम् । यद्वा, मम चेतो रमयतु सफलयतु । परोपकारकरणाद्, भृङ्गायमाणमुपकारलुब्धम् । भ्रमत् दुःखितमुपकर्तुं व्याप्रियमाणमित्यर्थः । तथापि भूयसो धूमादिविषयस्य न्यायस्य सत्त्वात् किमनेनेत्यत आह– ईशस्य पदयुगे, पद्यते ज्ञायतेऽनेनेति व्युत्पत्त्या प्रत्यायकयुगे प्रमाणतर्करूपे निवेशितस्तद्विषये उत्पादितः । अन्वयि व्यतिरेकि वा पदयुगम् । वेदस्य पौरुषेयत्वे केवलस्य व्यतिरेकिणोऽपि दर्शयिष्यमाणत्वात् । यद्वा, पदं ज्ञानं तद्युगं तदुभयोत्पादितम् । निमित्तसप्तम्या ज्ञानद्वयार्थमित्यर्थः । प्रमाणान्तरव्युत्पादनस्याप्यत्र तदर्थत्वादिति भावः । न तु शब्दानुमानरूपं पदयुगमत्र विवक्षितम् । श्रुतो हि—इत्यादिना तदतीतत्वोपदर्शनविरोधात् । ग्रन्थे च शब्दोपदर्शनस्याऽनुमाने तदऽविरोधमात्रप्रदर्शनतात्पर्य्यकत्वात् ॥ अनघत्वं न्यायानामुपपादयन्नाह॥सत्पक्षेति॥सति प्रामाणिके,पक्षे सिषाधयिषितसाध्यधर्म्मके धर्म्मिणि, प्रकर्षेण सरो ज्ञानं यस्मात्।अनेनाश्रयासिद्धिवाधसिद्धसाधनस्वरूपासिद्धिभागासिद्धयो निरस्ताः । तर्कपक्षे, सन् निर्दोषः पक्षप्रसरः पक्षव्यापकोऽनिष्टप्रसञ्जनरूपस्तर्को यस्मात् । सतां परामर्शकुशलानां परितः सपक्षे सत्तया विपक्षे चासत्तया यो मलः सम्बन्धो व्याप्तिरूपस्तस्य यः प्रोद्बोधः अबाधितप्रतिबन्धनिश्चयः साध्यसाधनयोः, साध्याभावसाधनाभावयोर्वा, आपाद्यापादकयोश्च। तेन बद्धः स्थिरीकृत उत्सव आनन्दो येन स तथा । नित्यसापेक्षत्वादसमर्थेऽपि समासः । तेनान्वयव्यतिरेकिणि सपक्षासपक्षयोः सत्त्वासत्त्वे, केवलव्यतिरेकिणि च विपक्षासत्त्वं दर्शितमिति व्याप्यत्वासिद्धिसव्यभिचारविरुद्धनिरासः । विमर्दनं तद्विषयीभूतप्रमाणविरोधिप्रमाणप्रदर्शनम् । तेन न विम्लानो न कार्य्याक्षम इति सत्प्रतिपक्षविरहो दर्शितः ॥

ननु तथाविधप्रमाणव्युत्पादनं न स्वतः प्रयोजनं, प्रयोजनवत्सन्निधावश्रवणाच्च न तदङ्गमित्यत आह ॥ अमृतेति ॥ अमृतं मोक्षः । तत्र रस इच्छा । रस्यमानममृतमिति यावत् । कृदभिहितो भावो द्रव्य-

वत् प्रकाशते इति न्यायात् । तस्य प्रस्यन्दोऽसम्बद्धसम्बन्धोपहिता क्रिया।उत्पत्तिरिति यावत् । तदेव माध्वीकं मधु ।तस्य भूरुत्पत्तिस्थानम् । रसपदेन स्वरूपत इष्यमाणतां दर्शयता, दुःखाभावोऽपि नावेद्यः पुरुषार्थ इति निरस्तम् । माध्वीकपदेन चोत्कटेच्छाविषयत्वं दर्शयता, सुखहानावपि तुल्याऽऽयव्ययतया नायमऽपुरुषार्थ इति दर्शितम् । अमृतं मोक्षः । तस्य रस इच्छा । तस्य प्रस्यन्दः प्रवाह उत्तरोत्तराऽनुवृत्तिः । स एव माध्वीकम् । तस्य भूरुत्पत्तिस्थानम्—इति तु न व्याख्यानम् । मोक्षेच्छायाः पूर्वं मोक्षज्ञानादेव सञ्जातत्वाद्, उत्तरोत्तरानुवृत्तेरपि उत्तरोत्तरज्ञानसाध्यत्वात् । एतावता मोक्षजनकेश्वरविषयानुमितिकरणलिङ्गपरामर्शविषयलिङ्गप्रतिपादनद्वारा मोक्षानुकूलत्वमस्य दर्शितम् ॥

अथ च, न्याय इव प्रसूनाञ्जलिरञ्जलिस्थानि कुसुमानि । तत्रानघत्वं न्यायोपात्तत्वमपर्य्युषितत्वादि च । रूपकपक्षेऽपि न साधर्म्यं विना तदिति तदुभयसाधर्म्यमाह ॥ सत्पक्षेति ॥ पचि व्यक्तीकरणे इति धात्वनुसारात् पक्षशब्दो दलवचनः । सत्पक्षाणां प्रसरो यत्र । सतां पक्षेणानुकूलेन रविकिरणादिना विकाशो यस्येति वा । तेन हस्तादिना कलिकाप्रकाशो निषिद्धः । यद्वा, सत्पक्षप्रसरः सदनुकूलविकाशः । सतां सुकृतिनामनुपहतघ्राणानां, परिमलः सौरभविशेषः, तस्य यः प्रोद्बोधः प्रकृष्टज्ञानम् । तेन बद्धः स्थिरीकृत उत्सवो येन स तथा । विमर्दने करपुटसम्पर्के न विम्लानो नान्यथाभूतसंस्थानः । अमृतप्रायो रसः । तं प्रस्यन्दते इति प्रस्यन्दः । कर्मण्यण् । अमृतरसप्रस्यन्द एव माध्वीकम् । तस्य भूरुत्पत्तिस्थानम् । यद्वा, अमृतमिव रसो यस्य।प्रस्यन्दते इति प्रस्यन्दः।अनयोः कर्मधारयः ॥१॥

ननु कर्मसु विद्यमानेषु जन्मानुच्छेदात्, तेषां चाभुक्तानाम् अक्षयाद् भोगेन च तद्धेतुना पुनः कर्मान्तरार्जनात् क्वाशेषगुणोच्छेदो मोक्षः । नापीश्वरे प्रमाणव्युत्पादनस्य मोक्षहेतुत्वे मानमिति तन्निष्फलम् । किञ्च, ईश्वरमननस्य मोक्षहेतुत्वे मानाभावः । आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्य इति श्रुतौ सामानाधिकरण्याद् यद्विषयकः साक्षात्कारो मोक्षजनकस्तद्विषयकं मननं मोक्षहेतुः । साक्षात्कारश्च न जीवात्ममात्रगोचरो, न चेश्वरविषयकस्तथा । मिथ्याज्ञानध्वंसद्वारा ह्यस्य तद्धेतुत्वम् । न च

जीवात्ममात्रगोचरमीश्वरगोचरं वा मिथ्याज्ञानं संसारहेतुर्येन तदुच्छेदस्तद्द्वारं स्यात्। किन्तु स्वात्मगोचरं मिथ्याज्ञानमिति तत्तत्त्वसाक्षात्कार एव मोक्षहेतुरित्यत आह ॥

**स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ॥**
**यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ २ ॥**

स्वर्गेति ॥ स्वर्गयोरुत्कटरागगोचरयोरपवर्गयोरपरपरयोर्मुक्त्योर्मार्गमुपायमित्यर्थः। तथाच परापरमुक्त्योरेकानुष्ठानसाध्यतां दर्शयता जीवन्मुक्तिसहिता परममुक्तिः साध्येति दर्शितम्। तेन च, न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य देहिन इत्यपूर्वकर्म्मोपार्ज्जनशङ्का निरस्ता। ईश्वरमननञ्च न तद्गोचरं प्रमाणमव्युत्पाद्य शक्यं व्युत्पादयितुमिति तद्बोधकप्रमाणव्युत्पादनमपि मोक्षहेतुः। प्रमाणव्युत्पादने च तत एव मननसिद्धौ न मननपर्य्यन्तं ग्रन्थव्यापारः। धूमोऽस्तीति वाक्यस्य यथा वह्निविषयानुमितिपर्य्यन्तव्यापारत्वमिति। ईश्वरमननाङ्गतया तत्प्रमाणव्युत्पादनमपि प्रयोजनवदिति सूचितम्। ईश्वरमननञ्च मोक्षहेतुः। तमेव विदित्वाऽतिमृत्युमेतीति श्रुत्या स्वात्मज्ञानस्येव ईश्वरज्ञानस्यापि तद्धेतुत्वप्रतिपादनात्। द्वे ब्रह्मणी वेदितव्ये इत्यत्र वेदनमात्रस्याकाङ्क्षितत्वेन प्रकृतत्वात्। श्रोतव्यो मन्तव्य इत्यादेरन्वयाच्च। ईश्वरमननञ्च यद्यपि मिथ्याज्ञानोन्मूलनद्वारा नोपयोगि, तथापि स्वात्मसाक्षात्कार एवोपयुज्यते। यदाहुः— स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोतीति। यद्वा, श्रुत्या तद्धेतुत्वे प्रमापिते तदनुपपत्त्याऽदृष्टमेव तद्द्वारं कल्प्यते। केचित्तु मोक्षस्यात्र प्रस्तुतत्वात् स्वर्गपदं मुख्यमेव दृष्टान्तार्थमुपात्तमित्याहुः। उपास्तीत्यत्र, ण्यासश्रन्थो युजिति युज्नभवति। क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्त्तते- इति न्यायाद्, बहुलवचनाद्वा। यद्वा धातुनिर्देशे श्तिपोऽयं प्रयोगः। तस्य च धातुरूपशब्दाभिधायकत्वेऽप्यर्थे द्विरेफपदवल्लक्षणा ॥ २ ॥

भगवदुपासना फलवती, निरूपणञ्च क्रियते, इत्यसङ्गतिं परिहरन् वादिनां विप्रतिपत्त्यभावेन न्यायाङ्गं संशयमाक्षिपति ॥

**इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः, शुद्ध-**

बुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्म्मविपाकाशयैरपरामृष्टो निर्म्माण-कायम् अधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, यावदुक्तोपपन्न इति नैया-यिकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, किं बहुना कारवोऽपि यं विश्वकर्म्मेत्युपासते, तस्मिन्नेवं जाति-गोत्रप्रवरचरणकुलधर्म्मादिवदासंसारं प्रसिद्धाऽनु-भावे भगवति भवे सन्देह एव कुतः ? किं निरूपणीय-म् । तथापि,

न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ॥
उपासनैव क्रियते श्रवणानन्तरागता ॥ ३ ॥

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहास-पुराणेष्विदानीं मन्तव्यो भवति । श्रोतव्यो मन्तव्यः इति श्रुतेः ।

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तममिति

स्मृतेश्च ॥

इहेति ॥ इह विचारे । सन्देह एव न्यायपूर्वाङ्गं कुतः । अत्र हेतुः प्रसिद्धानुभावे ॥ अनुभावे असाधारणीं कारणतामाह ॥ यं कमपी-ति ॥ यं कमपि मोक्षादिकं स्वाभिमतं पुरुषार्थमर्थयमानाः, यमीश्व-रमुपासते मननविषयीकुर्वन्तीत्यौपनिषदा इत्यादौ सर्वत्र सम्बन्धः । शुद्ध एको, द्वितीयाभावात् । बुद्धः स्वप्रकाशज्ञानात्मकः । द्वितीया-

भावेन परप्रकाश्यत्वानुपपत्तेः। एतदुभयं वेदान्तिसाधारणम् ॥ आदीति ॥ आदौ प्रथमतो विद्वांश्चिद्रूपः स्वभावतश्चेतनो, न तु प्रकृतिवच्चेतनोपरागादौपाधिकं चैतन्यं तस्येत्यर्थः । सिद्धो नित्यो, न तु बुद्ध्यादिवत् साध्यः। तेन कूटस्थनित्यो, न तु प्रकृतिवत् परिणामिनित्य इत्यर्थः। एतच्च सकलक्षेत्रज्ञसाधारणत्वान्न परमात्मोत्कर्षाभिधायकमित्यन्यथा व्याख्येयम्। आदौ सर्गादौ, विद्वान्। सिद्धो योगर्द्धिसम्पदुत्पादिताष्टविधैश्वर्य्यसम्पद्युक्त इत्यर्थः । यथोक्तं तत्त्वकौमुद्यां वाचस्पतिमिश्रैः– सर्गादावादिविद्वानऽनुभवन् कपिलो महामुनिर्धर्म्मज्ञानैश्वर्य्यसम्पन्नः प्रादुर्बभूवेति स्मरन्तीति ॥ क्लेशेति ॥ अविद्यास्मितारागद्वेषाभिनिवेशाःक्लेशाः। कर्म्म धर्म्माधर्म्महेतुर्भावनासाध्यं यागहिंसादि। विपाको जात्यायुर्भोगाः। फलपर्य्यन्तमाशेरत इत्याशया धर्म्माधर्म्माः। तैरपरामृष्टोऽसम्बद्ध इत्यर्थः। शरीरैकनिष्पाद्यवेदादिनिर्म्माणार्थं कायो निर्म्माणकायः। सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायो वेदः। स चानादिरेव भगवता द्योत्यते। भगवतश्चादृष्टाभावेऽपि तच्छरीरसाध्यघटादिजन्यभोगजनकास्मदाद्यदृष्टैरेव तन्निष्पाद्यते ॥ अनुग्राहको घटादिनिर्म्माणे शिक्षाद्वारेत्यर्थः ॥ लोकेति ॥ लोकविरुद्धैः सर्प–दहनधारणादिभिः, वेदविरुद्धैर्दारुवनद्विजवधूविध्वंसनैरुपलक्षितः । इत्थम्भूतलक्षणे तृतीया। सोऽयमित्थम्भूतोऽपि निर्लेपः, पापरूपलेपरहित इत्यर्थः। करणे वा तृतीया। वेदविरुद्धहेतुक–भोगजनकविशेषगुणरहित इत्यर्थः । स च सुखं दुःखं धर्म्माधर्म्मौ चेति । मिथ्याज्ञानसलिलावसिक्तायामात्मभूमौ कर्म्मबीजं धर्म्माधर्म्माङ्कुरमारभते, न तु तत्त्वज्ञाननिदाघनिपीतसलिलतयोषरायामिति भावः ॥ स्वतन्त्रो जगत्कर्त्ता ॥ शिवो निस्त्रैगुण्यः। पुरुषेषूत्तमः सर्व्वज्ञत्वात्। पितामहो जनकस्यापि जनकः। यज्ञे प्रधानमिज्यं यज्ञपुरुषः। सर्वज्ञः क्षणिकसर्वज्ञः॥ निरावरण इति॥ आवरणमदृष्टमविद्या स्वकर्म्मोपार्ज्जितश्च शरीरमस्य नास्तीत्यर्थः ॥ उपास्यत्वेनेति॥ वेदोपदिष्टोपास्यभावः कश्चिन्मन्त्रादिरित्यर्थः॥ लोकेति॥ यथा लोके व्यवह्रियते चतुर्भुजाद्युपेतदेहवान्,नत्वदृश्य इत्यर्थः। यावदुक्तेति ॥ यावदुक्तेषु यदुपपन्नं युक्तिमत् सर्वज्ञत्वादि, तेनोपपन्नः सम्पन्न इति मध्यपदलोपी समासस्तत्पुरुषः । यावदुक्तेषु उपपन्नः प्रामाणिको धर्म्मो यस्येति बहुव्रीहिर्वा । न तु यावद्भिरुक्तैरुपपन्नः

सहित इत्यर्थः। अद्वैताद्यनङ्गीकारेण यावद्यथाव्याख्यातार्थस्य नैयायिकैरनङ्गीकारात्। यद्वा, सन्देह एव कुत इत्युपसंहारात् सर्वाण्येव दर्शनान्येकार्थपरतया व्याख्यायन्ते। शुद्धो दोषहीनः, बुद्धस्वभावो घटादिभिन्नत्वे सत्यौपाधिकचैतन्यरहितः, आदौ सर्गादौ, विद्वान् ज्ञानवान्, सिद्धो नित्यः, सम्प्रदायप्रद्योतको वेदं प्रणीय सर्गादिसमुत्पन्नाध्यापकः, अनुग्राहकः कुलालादिकृतेऽपि घटादौ सहकारीत्यादिक्रमेण। नचैवमैकमत्येन दर्शनभेदानुपपत्तिः। फलैकमत्येऽपि प्रकारभेदात् सर्वथा विरोधाभावे विचारोपयोगिसंशयस्याप्यभावप्रसङ्गात्। यद्यपि मीमांसकानीश्वरसांख्यमते नेश्वरे सम्प्रतिपत्तिः, तथाप्युपास्यत्वेन धर्म्मिणि सम्प्रतिपत्तिरस्त्येव। कारुः शिल्पी। विश्वं सर्व्वमुत्पत्तिमत् कर्म्म कार्य्यं यस्य स तथा। जातिर्ब्राह्मणादि। गोत्रं काश्यपादि। ऋषय एव यज्ञे व्रियमाणाः प्रवराः। चरणं शाखा। अनुभावोऽसाधारणं कार्यं वेदादि। अत एव, भवत्यस्मादिति भवः। तथाच, जातिगोत्रादिवत् संसारमभिव्याप्य श्रुत्यादिप्रमाणसिद्धे परमात्मनि न सन्देहोऽतस्तत्रेश्वरे किं निरूपणीयमित्यर्थः। तथापि धर्म्मिणि भगवति विहितमनने प्रकाराकाङ्क्षायां तत्र विप्रतिपत्त्या सन्देहोऽस्तीति मनसिकृत्य मननरूपोपासनैव क्रियते इति समाधत्ते॥ तथापीति॥

न्यायेन चर्च्चा न्यायचर्च्चा अनुमितिरूपा, उपासनैवेति सम्बन्धः। श्रवणानन्तरागतेत्यनेन श्रुतिप्रामाण्यग्राहकन्यायनिरूपणमपि सूचितम्। श्रवणानन्तरागतेति संगृहीतं विवृणोति॥ श्रुतो हीति॥ श्रुतिमूलकत्वात् स्मृतेरपि तत्समानविषयतया स्वबोधदार्ढ्यार्थं श्रवणे उपयोग उक्तः। उत्तमो योग आत्मसाक्षात्कारः। ननु भगवति सन्देहाऽभावेन सिद्धसाधनात् कथमनुमितिः?। सिद्धसाधनं स्वार्थानुमाने न दोषः। प्रमाणसम्प्लवस्य संस्थापनादितिचेद्, न। विनिगमकाभावात्। ग्रन्थस्य परार्थानुमानरूपत्वाच्च। यथा अग्निहोत्रं जुहोति, यवागूं पचतीत्यत्रार्थेन क्रमेण शाब्दः क्रमो लङ्घ्यते। तथा, श्रोतव्यो मन्तव्य इत्यत्रापि मननानन्तरं श्रवणे श्रुतेस्तात्पर्य्यमिति चेद्, न। दृष्टान्ते, होमे द्रव्यान्तरसाधनत्वं यवागूपाकस्यादृष्टार्थत्वञ्च कल्प्यमिति गौरवात्तथाऽस्तु, प्रकृते त्वनुपपत्त्यभावः। श्रवणानन्तरं मननस्यान्यथोपपाद्यत्वात्। श्रवणानन्तरागतेति ग्रन्थविरोधाच्च। श्रोत-

व्यः श्रुतिवाक्येभ्यइति बहुवचनं, कपिञ्जलानालभेतेतिवत् त्रित्वपरम्। अतो रूपान्तरेण मननमविरुद्धमिति चेन्न। श्रोतव्योमन्तव्य इति सामानाधिकरण्यश्रुतेर्लाघवाच्च येनैव रूपेण श्रवणं तेनैव रूपेण मननस्योचितत्वात्। न वा रूपान्तरेण श्रुतस्य रूपान्तरेण मनने श्रद्धामलक्षालनं शास्त्रव्यापारो निर्वहति। श्रुतस्यामननात्। अत एव, धर्मिस्वरूपे सन्देहाभावेऽपि क्षितिकर्तृत्वादौ धर्मे सन्देहात्तत्रानुमेत्यपास्तम्। तथापि धर्मिणि सन्देहानुपपादनाच्च। न वा, तद्रूपमस्तीश्वरे, यन्न वेदे श्रुतमस्ति। तथाच, श्रोतव्यः श्रुतिवाक्येभ्य इत्यत्रासङ्कोचादीश्वरपरसर्ववाक्येभ्य एव श्रवणे सति कथं मननम्। एतेन, भगवति भवे सन्देह एव किं निरूपणीयमिति, कुतः = पृथिवीतः कर्तृजन्यत्वसंशयात्तत्र संशय एवेत्यपि योजनामात्रमपास्तम्। यत्तु, श्रुतेऽपि भगवति श्रुतेः प्रामाण्यसन्देहात्तत्प्रतिपादितेऽपीश्वरे सन्देह इति। तन्न। श्रोतव्यो मन्तव्य इति सामानाधिकरण्यविरोधात्। मननस्य प्रामाण्यविषयकत्वात्। यदि च श्रुतिरनवधृतप्रामाण्येव, तदा कथं ततः श्रवणेऽपि बह्वायाससाध्ये प्रवृत्तिः। तथात्वेऽपि वेदप्रामाण्यानुमानमात्रौचित्यादीश्वरानुमानानुपपत्तिः॥

अथ सिद्धसाधनं, न हेत्वाभासः। उभयथा हि हेत्वाभासता, करणविघटकत्वाद्विरुद्धानैकान्तिकयोरिव, तद्विघटनमकुर्वतः स्वत एव प्रतिबन्धकत्वाद्बाधप्रतिरोधवत्। सिद्धसाधनन्तु न व्याप्तिविघटकं, न वा स्वत एव प्रतिबन्धकम्। अतो न हेत्वाभासः। दूषकता त्वर्थान्तरान्तर्भावादिति मतम्। तन्न। व्याप्तिज्ञानस्येव पक्षधर्मताज्ञानस्यापि तत्कारणत्वात् तद्विघटकसिद्धसाधनस्यापि तदौचित्यात्। पक्षधर्मताज्ञानं न तत्करणं किन्तु व्याप्तिज्ञानमिति चेन्न। लाघवात् कारणमात्रस्य प्रयोजकत्वात्। श्रुतिबोधितेऽपि भगवति बहुविधकर्तृत्वकौटस्थ्यनिरञ्जनादिश्रुतेः, कुत्र श्रुतिर्मुख्यार्था, कुत्र वोपचरितार्थेति तात्पर्य्यसन्देहात् सन्देह इतिचेन्न। तथापि धर्मिस्वरूपे संशयानुपपादनात् तात्पर्य्यग्राहकन्यायाभिधानमात्रस्योचितत्वात्। कर्तृत्वादौ सन्देहादुत्कटकोटिको धर्मिण्येव सन्देहोऽन्यथा धर्मी क्वाऽपि संशयविषयो न स्यादिति चेन्न। श्रोतव्यो मन्तव्य इत्यत्रात्मज्ञानस्य मोक्षहेतुत्वं, न तु तद्धर्मिककर्तृत्वादिनिश्चयस्येति तत्सन्देहस्यानुच्छेद्यत्वात्। तथापि निर्धर्मकस्य तस्य ज्ञातुमशक्यत्वात्तद्धर्म-

निश्चयोऽप्यादरणीय इति चेन्न। परस्पराविरुद्धप्रकारेण तच्चिन्तनोपपत्तेरिति दिक् ॥

अत्रोच्यते। साध्यज्ञानं न स्वतः साध्यज्ञानविरोधि। धारावाहिकसत्त्वात्। नापि साध्यानुमितिविरोधि। प्रत्यक्षाधिगतस्याप्यनुमितिदर्शनात्। किन्तु सिषाधयिषाघटितपक्षत्वविघटनद्वारा । सिषाधयिषा च साध्यज्ञानेच्छा। सा च द्वयी साध्यज्ञानमात्रे तद्विशेषे च। तत्र या साध्यज्ञानमात्रेच्छा सा श्रौतज्ञानान्निवर्त्तताम्। यत्किञ्चिद्विशेषसिद्ध्यैव हि सामान्येच्छाविच्छेदः। अन्यथा सकलविशेषसिद्धेरसम्भवेन तद्विच्छेदः क्वापि न स्यादेव। या त्वनुमितिरूपसाध्यज्ञानविशेषेच्छा सा कथं निवर्त्तेत। तद्विषयस्य ज्ञानविशेषस्यासिद्धेः। इच्छायाः स्वविषयसिद्धिनिवर्त्त्यत्वात् । अत्र च, श्रोतव्यो मन्तव्य इति श्रुत्या मननस्येष्टसाधनत्वावगतेः श्रौते ज्ञाने वृत्तेऽपि मननस्याऽसिद्धत्वात् तत्रेच्छा भवत्येवेति न सिषाधयिषाविघटनद्वारकदूषणभावस्यसिद्धसाधनस्यावकाशः। इच्छाविषयत्वावच्छेदकरूपतत्सिद्धेः सिद्धपदेन विवक्षितत्वात्। अत एव सिद्धसाधनं दशाविशेषे दोषः, पृथक् च न दूषणम्। असिद्ध्युपजीव्यत्वेऽपि बाधवत् स्वतो दूषकत्वाभावात्, किन्तु दूषकतायामुपाधेरिव परमुखनिरीक्षकत्वात्। भवेदेवं यदि सिषाधयिषाघटितं पक्षत्वम्। तदेव न। तस्य विशेषणतोपलक्षणतयोरुभयत्रापि दोषात्। योग्यतायाश्च तदवच्छेदकरूपपरिचेयत्वादिति चेन्न। सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावस्य तत्त्वात्। स च विशिष्टाभावो यत्र साधकप्रमाणसिषाधयिषे स्तः तत्र विशेषणाभावात्। यत्रोभयाभावस्तत्र विशेष्याभावात्। यत्र साधकप्रमाणाभावे सिषाधयिषामात्रमस्ति तत्र द्वयाभावात् सर्वत्राविशिष्टः। यत्र साधकप्रमाणे सत्यपि सिषाधयिषाया अभावस्तत्र नास्तीत्यस्मत्पितृचरणाः। तथापि संशयं विना कथं न्यायावतार इति चेदित्थम्। संशयो हि न्यायाङ्गं न तावद् न्यायकारणतया। तस्य लिङ्गपरामर्शात्मनः संशयं विनाऽपि सम्भवात्। कारणत्वासिद्धौ फलवैजात्यस्यापि कल्पने मानाभावात्, अन्योन्याश्रयाच्च। नापि सहकारित्वेन। तद्धि न साक्षात्। लिङ्गपरामर्शादिना तन्नाशात्। शाब्दलिङ्गपरामर्शे तत्कारणत्वाभावाच्च संशयस्य कारणत्वासिद्धौ तत्कल्पनेऽपि मानाभावात्। अत एव परम्परयाऽपि सहकारित्वमपा-

स्तम्। नाप्याश्रयावच्छेदकत्वेन। पर्वतत्वादेरेव तथात्वात्। अन्यथा पक्षतावच्छेदक-धर्म-साध्ययोः सामानाधिकरण्यभाननैयत्येन पर्वतत्वादेरिव सन्दिग्धत्वस्याप्यनुमितौ भानापत्तेः। अथ संशयेन स्वयोग्यतोपलक्षणात् साधकबाधकमानाभावो न्यायाङ्गमिति चेन्न। तथापि संशयस्यातत्त्वात्। संशययोग्यतायास्तदङ्गत्वाद् विशिष्टस्य तद्ग्राहकमानेन विशेषणस्यापि तत्त्वं विषयीकृतमितिचेन्न। मिलिताभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात्। प्रत्येकश्च न योग्यता। केवलान्वयिनि बाधकाप्रसिद्धेश्चेत्यन्यत्र विस्तरः। तथापि, संशयस्यानुमितिमात्राहेतुत्वेऽपि जिज्ञासितार्थानुमितौ जिज्ञासाद्वारा संशयस्यानुमितिहेतुत्वम्। यद्वा, शङ्कशुकतानिवृत्तये न्यायोपासने संशयोऽङ्गमिति संशयं विना यो न परितुष्येत् तं प्रति, श्रोतव्यो मन्तव्य इति श्रुतेरनन्यगत्या भिन्नविषयक एव धर्मविशेषसंशयो धर्मिविषयकन्यायप्रवृत्तिहेतुरित्यास्थेयमिति विभावयंस्तत्कारणं विशेषविप्रतिपत्तिमादर्शयति—

**तदिह संक्षेपतः पञ्चतयी विप्रतिपत्तिः। अलौकिकस्य परलोकसाधनस्याभावात्। अन्यथापि परलोकसाधनानुष्ठानसम्भवात्। तदभावावेदकप्रमाणसद्भावात्, सत्त्वेऽपि तस्याप्रमाणत्वात्, तत्साधकप्रमाणाभावाच्चेति ॥**

**तत्र न प्रथमः कल्पः। यतः।**

**सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ॥**
**प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥ ४ ॥**

**न ह्ययं संसारोऽनेकविधदुःखमयो निरपेक्षो भवितुमर्हति। तदा हि स्यादेव न स्यादेव वा, न तु कदाचित् स्यात्। अकस्मादेव भवतीति चेन्न।**

तदिहेति ॥ तदिति वाक्योपक्रमे। संक्षेपोऽवान्तरविप्रतिपत्त्यविवक्षा। विरुद्धा प्रतिपत्तिर्ज्ञानमभिलापो वा विप्रतिपत्तिः। विप्रतिपत्तौ

विषयिण्यां विषयस्य प्रयोजकत्वं विवक्षित्वा पञ्चमीनिर्देशः। तत्राऽलौकिके तावत्, साक्षात्कारकारणेन्द्रियसन्निकर्षाश्रयत्वं प्रमेयत्वव्यापकं, न वा? इन्द्रियस्य तु न सन्निकर्षाश्रयत्वं, किन्तु प्रतियोगित्वमिति न विप्रतिपत्तिः। य एव चक्षुषा रूपस्य संयुक्तसमवायः स एव गुरुत्वस्यापीति तस्यापि लौकिकत्वापत्तेः। किन्तु सामान्यलक्षणप्रत्यासत्त्यजन्ययोगजधर्माजन्यस्वविषयकसविकल्पकाजन्यजन्यसाक्षात्कारविषयत्वं प्रमेयत्वव्यापकं न वा? अभावसमवाययोस्तादृशप्रतियोगिसंबन्धिसविकल्पकजन्यसाक्षात्कारविषयत्वेऽपि प्रत्यक्षत्वात् तत्संग्रहार्थं स्वविषयेति विशेषणम्। अत्र यद्यपि घटोऽयमिति सविकल्पके घटत्वस्य तत्कारणज्ञानविषयताऽस्ति, तथापि तज्ज्ञानाऽजन्यनिर्विकल्पकविषयताऽप्यस्ति। न हि तज्ज्ञानजन्यज्ञानगोचरत्वं तज्ज्ञानाजन्यज्ञानगोचरताविरोधि। एकत्र ज्ञानद्वयस्य भावादित्याहुः॥

अलौकिकविशेषे त्वदृष्टे प्रयत्नकारणात्मविशेषगुणनिरुपाधिविषयकारणात्मविशेषगुणत्वं मानसप्रत्यक्षाविषये वर्त्तते नवा? यद्वा, लौकिकप्रत्यक्षाविषयगुणत्वसाक्षाद्व्याप्यजात्यधिकरणत्वमात्मगुणे वर्त्तते, न वा? भावनात्वन्तु न गुणत्वसाक्षाद्व्याप्यमदृष्टत्वन्तु न जातिः॥

परलोके तु, समानकालीनानेकावृत्ति शरीरवृत्तिजातित्वं दुःखावच्छेदकत्वासमानाधिकरणवृत्ति न वा? इति स्वर्गे। नरके तु दुःखपदस्थाने सुखपदप्रक्षेपात् संशयः। तादृशी च जातिर्बाल्यादिशरीरवृत्तिरसाधारणी चैत्रत्वादिः प्रसिद्धेति विशेषतः। परलोकमात्रे तु सुखदुःखोभयजनक--मच्छरीरातिरिक्तशरीरवानहं न वेति संशयः। चैत्रस्तथा प्रसिद्धः॥

साधने तु प्रागभावत्वाद्यप्रतियोगि कार्यं प्रतियोगित्वप्रागभावान्यप्रागभावाविषयप्रतीत्यविषयप्रतियोगि, न वा? यद्वा, कार्य्यप्रतियोगित्वं प्रतियोगित्वप्रागभावान्यप्रागभावाविषयबुद्ध्यविषयवृत्ति न वा? द्वयोरपि प्रागभावत्वे प्रसिद्धिः। यद्वा, कार्य्यपूर्ववर्त्तिनि तन्नियतत्वं वर्त्तते, न वा? यद्वा, तज्जातीयोत्पत्तिप्राक्क्षणत्वप्रतियोगिव्यापकतावच्छेदकत्वमत्यन्ताभावप्रतियोगिवृत्ति न वा?॥

विशिष्टे तु, अलौकिके परलोकसाधनत्वं वर्त्तते, न वा? परलोकसाधनेऽलौकिकत्वं वर्त्तते न वेति विप्रतिपत्तिः। तथाच कार्य्यकारण-

भावाभावे क्षित्यादिकर्त्तृत्वान्नेश्वरसिद्धिः। परलोकाभावे च तत्साधनयागादिद्रष्टुरभावे तदुपदेशकतयाऽपि नेश्वरसिद्धिः। अदृष्टाऽसिद्धौ तदधिष्ठातृतयाऽपि नेश्वरासिद्धिरिति चार्वाकाभिप्रायः॥

अन्यथेति॥अदृष्टादिसत्त्वेऽपि वेदानामाप्तोक्तत्वेन प्रामाण्यावधारणं विना तद्बोधितस्वर्गादिसाधनयागादौ बहुवित्तव्ययायाससाध्ये न प्रवृत्तिरित्याप्तो वेदकारः सिद्ध्यतीति नास्ति, अन्यथाऽपि वेदानां नित्यनिर्दोषत्वेन स्वतः प्रामाण्यावधारणात्। परतः प्रामाण्येऽपि कर्मयोगसिद्धसर्वज्ञपूर्वकत्वात्तेषां परलोकसाधनयागाद्यनुष्ठानसम्भवादित्यर्थः॥ तदभावेति॥ भवतु वेदानां पौरुषेयत्वाद् योगसिद्धसर्वज्ञपूर्वकत्वेनाश्वासाद्याप्तोक्तत्वम्। तथापि तत्र, क्षित्यादेः कर्तृजन्यत्वे च प्रत्यक्षादिबाधान्न तत्सिद्धिरित्यर्थः॥ सत्त्वेऽपीति॥ बाधकाभावात्तत्सिद्धावपि स न प्रमाणम्। प्रमाणपदं हि भावकरणकर्त्तृव्युत्पत्त्या प्रमातत्साधनतदाश्रयेषु वर्त्तते। यथार्थानधिगतार्थाधिगतिश्च प्रमा। तथा च यदीश्वरः कर्त्ता स्यात् प्रमावांस्तत्करणेन्द्रियादिमांस्तत्समवायिकारणञ्च स्यात्। न चायं तथेति विपर्य्ययानुमानादित्यर्थः। अप्रमाणपुरुषस्य वचः कः श्रद्धास्यतीति भावः॥तत्साधकेति॥कार्यत्वादेरुपाधिदुष्टत्वात् क्षितिवेदादेः कर्त्तृजन्यत्वसाधकमेव नास्तीत्यर्थः॥

तत्र चार्वाकस्यायं भावः। कार्य्यकारणभावे प्रत्यक्षं न तावन्मानं, धर्मिस्वरूपप्रत्यक्षेऽपि तत्र संशयात्। नचान्वयव्यतिरेकानुविधानज्ञानसहकारिविरहात् स इति वाच्यम्। तन्मात्रस्य व्यभिचारिसाधारण्यात्। नियमानन्यथासिद्ध्योश्च शङ्काकलङ्कितत्वेनानवधारणात्। नाप्यनुमानं, तस्य मया मानत्वेनानभ्युपगमात्। तत्साधने क्वचिदऽसिद्धावन्वयिनोऽसम्भवात्। तदप्रसिद्धौ व्यतिरेकाज्ञानात् केवलव्यतिरेक्यनवतारात्। मम त्वप्रमितस्यासत्ख्यात्यभ्युपगमान्न निषेध्याप्रसिद्धिरित्यत आह॥ तत्रेति॥ तेषु मध्ये न प्रथमः पक्षः कल्पो यतः, कल्पनाऽसत्ख्यातिस्तद्विषयः। तथाहि, कार्य्यकारणभावानभ्युपगमे परप्रतिपत्तिफलकवचनप्रयोगानुपपत्तेः। यथा यथा तन्निराकरणाय प्रयत्नस्तथा तथा तस्यैवापत्तेरिति व्याघात एवेत्यर्थः।

तथापि साधकं विना न तत्सिद्धिरिति चेत्, तत्राह॥ सापेक्षत्वादिति॥ विवादपदस्य सापेक्षत्वात् सहापेक्षया वर्त्तमानत्वात् कादाचित्कत्वादित्यर्थः। तच्च किञ्चित्कालासंबन्धित्वे सति किञ्चित्काल-

संबन्धरूपं कार्य्याणां प्रत्यक्षसिद्धमित्यनन्यथासिद्धमेतत्। अस्माद-नन्तरमिदं भवत्येतदभावे नेति प्रत्यक्षमेव कार्य्यकारणभावे मानम्। अत एव प्रागभावस्य कादाचित्कत्वेऽपि न तत्र तत्सिद्धिः। प्राग-सत्त्वस्य विवक्षितत्वाद्वा। अपि च, इदमस्मान्नियतपूर्वसदित्यपि प्र-त्यक्षं तत्र मानम्। प्रत्यक्षे चानन्यथासिद्धिनियमांशाऽवधारणहेतु-शङ्कानिवर्त्तकस्तर्को दर्शयिष्यतेइतिभावः। यद्वा, प्रत्यक्षसहकारित्वेना-ऽनुमानमेवोपन्यस्तम्। यद्वा, प्रथमतोऽनुमानप्रामाण्यं प्रसाध्य कार्य्यं सहेतुकं कादाचित्कत्वात्। यन्नैवं, तन्नैवम्। यथाऽऽकाशम्। न च साध्याप्रसिद्धिः। कियद्भागे प्रत्यक्षेणैव तत्सिद्धौ तदविषयेऽनुमाना-त्। नचोत्पत्तेः कादाचित्कत्वेऽपि न सहेतुकत्वम्। तथात्वे वोत्पत्तिम-त्त्वापत्तावनवस्थेति वाच्यम्। कार्य्यस्याद्यक्षणेन सह स्वरूपसंबन्ध एव ह्युत्पत्तिः। कार्य्यक्षणस्वरूपयोश्चोत्पत्तिमत्त्वेन हेतुमत्त्वात्। यद्वा, उत्पत्तिगर्भः किञ्चित्समयसंबन्धः कादाचित्कत्वम्। अत एव न प्रागभावे व्यभिचारः। न चोत्पत्तेरुत्पत्तिमत्त्वेन हेतुमत्त्वात् स इति न तया व्यभिचारः। एतेनानुमानपक्षे, हेतुरस्ति सापेक्षत्वाद्- इत्यत्र हेतोरसिद्धावाश्रयासिद्धिः। सापेक्षत्वस्य कार्य्यधर्मत्वेन हेताववृत्तौ स्वरूपासिद्धिश्च। कार्य्यस्यैव पक्षत्वे, सापेक्षत्वादित्यस्य हेतुमत्वा-दित्यर्थे साध्याविशेषः। कादाचित्कत्वादित्यर्थे च प्रागभावेन व्यभि-चार इत्यपास्तम्॥

ननु हेतुरपि यदि सदातनस्तदा तत्सापेक्षस्य कार्य्यस्यापि तथा त्वापत्तिरिति कादाचित्कत्वमहेतोरिवाकाशादेः सहेतोरपि सपक्षात् व्यावृत्तमित्यसाधारणं स्यादिति हेतुः कादाचित्को वाच्यः। तथा च तस्यापि कादाचित्कत्वं हेत्वपेक्षयेत्यनवस्थापत्तिः। अहेतुकत्वे च तद्वदेव कार्य्यमप्यहेतुकं कादाचित्कं स्यादित्यत आह॥ अनादित्वा-दिति॥ हेतोरपि कादाचित्कत्वं स्वहेतुकादाचित्कत्वादेव। प्रामाणि-की चेयमनवस्था बीजाङ्कुरवन्न दोषायेत्यर्थः॥

ननु कारणमात्रसिद्धावप्येकमेकजातीयं वा कारणमस्तु कार्य्य-जातस्य। तच्चास्मदादिनैव शक्यज्ञानमिति न तदर्थमुपदेशो, न वा विलक्षणसामग्रीजन्यं कार्य्यं सिद्ध्यतीत्यत आह॥ वैचित्र्यात्॥ भिन्न-जातीयकारणानन्तरं तथाभूतकार्य्यविषयकं प्रत्यक्षमेव विचित्रे साधने मानमुपन्यस्तम्। यद्वा, वैचित्र्यं कार्य्यस्य विचित्रहेतुकत्वे

२। १२

लिङ्गमेव । उभयत्राप्यभिन्नत्वाभिन्नजातीयत्वयोर्हेत्वोः कार्य्यस्य भेद-विजातीयत्वे आकस्मिके स्यातामिति तर्कः सहकारीत्यर्थः ॥

तथापि दृश्यमानविचित्रहेतुकमेव कार्य्यमस्त्विति नादृष्टसिद्धि-रित्यत आह ॥ विश्ववृत्तितः ॥ विश्वेषां प्रेक्षावतां परलोकार्थितया यागादौ प्रवृत्तिः प्रेक्षावत्प्रवृत्तित्वेन सफला । फलसाधनत्वञ्च यागा-देराशुविनाशित्वेन न स्यादिति तज्जन्यफलानुकूलमदृष्टं कल्प्यते इत्यर्थः ॥

तथापि तददृष्टं भोग्यनिष्ठमुत भोक्तृनिष्ठम् ? । अन्त्येऽपि किं प्रतिभोक्तृनियतं, साधारणं वा ? इत्यत आह ॥ प्रत्यात्मेति ॥ भुक्तेः सुखदुःखसाक्षात्कारस्य प्रत्येकात्मनियतत्वाल्लाघवाच्च तदुपपादकं प्रतिभोक्तृ नियतमेवादृष्टं कल्प्यते इति, अस्ति हेतुरलौकिक इत्याद्य-स्तबकार्थसंग्रहः ॥

यथोक्तप्रत्यक्षानुमानयोरन्यथासिद्धिनिरासाय तर्कमाह ॥ न ह्य-यमिति ॥ अनेकविधेति ॥ मुमुक्षुवैराग्यार्थं कार्य्यवैचित्र्यस्फोरणार्थं वा । तच्च विचित्रादृष्टसाधनोपयुक्तम् । निरपेक्षत्वञ्च किञ्चित्पदार्था-ऽवधिकोत्तरत्वव्याप्यकालसम्बन्धित्वम् । न च प्रतियोग्यप्रसिद्धिः । तस्यासत्ख्यातिवादिनः सांव्यवहारिकस्य सापेक्षत्वस्यापि स्वीकारात्॥

ननु, निरपेक्षत्वेनैकेन व्याप्येन स्यादेव, न स्यादेवेतिरूपं व्यापक-द्वयं विरुद्धं कथमापाद्यते । न ह्येकं मिथोविरोधिद्वयव्याप्यम् । तु-शब्दश्चासङ्गतः । कादाचित्कत्वाभावस्य स्वतन्त्रस्यैवानिष्टापादनार्थ-त्वात् । अत्राहुः । निरपेक्षत्वेन कादाचित्कत्वव्यतिरेक एवापाद्यः । स च स्यादेव, न स्यादेवेति पक्षद्वये पर्य्यवस्यति । अत एव तुशब्दोऽपि सङ्गच्छते । यद्वा, कार्य्यं यदि निरपेक्षं स्यात्, स्यादेव नित्यं स्यादा-काशवदिति स्वमते । तन्मते तु न स्यादेव केवलान्वय्यत्यन्ताभाव-प्रतियोगि स्यात् खपुष्पवत् । उभयत्र तु कादाचित्कत्वं न स्यादिति। यद्वा, एतदुत्तरकालानुत्पत्तिकोऽयं घटो यद्येतदुत्तरकालानुत्पत्तिकत्वे सत्येतत्पूर्वकालोत्पत्तिकानपेक्षोत्पत्तिकः स्यादेतत्पूर्वकालवृत्तिः स्या-त् । यद्वा, यद्ययमेतत्कालीनोत्पत्तिको घटः सहेतुको न स्यादेतत्पूर्व-कालीनः स्यात् । यद्वा, घटो यदि घटव्यवहितकालानधिकरणपदा-ऽर्थाधिकरणक्षणोत्तरत्वव्याप्योत्पत्तिर्न स्याद्, घटव्यवहितकालःस्यात् तत्कालवृत्तिघटादिवदिति तत्र तत्र सत्त्वापादनं स्यादेवेत्यस्यार्थः ।

अन्यकालानुत्पत्तिकोऽयं घटो यद्येतत्पूर्वकालानपेक्षोत्पत्तिकः स्यादे-
तत्कालोत्पत्तिको न स्यात् ।
यद्वा, सकलकालावृत्तिरयं घटो यदि निरपेक्षः स्यात् किञ्चित्काला-
ऽवृत्तित्वे सति किञ्चित्कालवृत्तिर्न स्यात् । तेन पक्षविशेषणमहिम्ना-
ऽलीकत्वं सिद्ध्यति । यद्वा, एतावत्कालपूर्वापरकालावृत्तिर्घटो यद्येता-
वत्कालपूर्वकालावृत्तित्वे सति एतत्कालाव्यवहितपूर्वकालवृत्तिपदा-
र्थाधिकरणक्षणोत्तरत्वव्याप्यकालो न स्यादेतावत्कालवृत्तिर्न स्यादि-
ति, न स्यादेवेत्यस्यार्थः । अत एव कालान्तरावृत्तित्वे सत्येतत्काल-
वृत्ति स्यादिति कादाचित्कत्वाभावापादनमपीति सम्प्रदायविदः ॥

कार्य्यकारणभावग्राहकमाने, कादाचित्कभावो निर्हेतुको भाव-
त्वाद् व्योमवदिति सत्प्रतिपक्षं शङ्कते ॥ अकस्मादिति ॥ अत्र किंशब्दो
यदा हेतुमात्रपरस्तदा तस्य नञा सम्बन्धाद्धेत्वभावे भवनं लभ्य-
ते । यदा तु भवनक्रियाया नञा सम्बन्धस्तदा प्रसज्ज्यप्रतिषेधे
भवननिषेधोऽर्थः । किंशब्द–समस्यमानेनापि नञा भवतीत्यस्यान्वया-
त् । असामर्थ्येऽप्यसूर्य्यम्पश्या राजदारा इतिवत् समासः । अ–शब्द-
स्यैव वाऽयं समासं विना प्रयोगः । अ मा नो ना प्रतिषेधवचना इति
कोषात् ॥

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ॥
स्वभाववर्णना नैवमवधेर्नियतत्वतः ॥ ५ ॥

हेतुनिषेधे भवनस्यानपेक्षत्वेन सर्वदा भवनम-
ऽविशेषात् । भवनप्रतिषेधे प्रागिव पश्चादप्यभवनमवि-
शेषात् । उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन
स्वस्मादिति पक्षानुपपत्तेः । पौर्वापर्य्यनियमश्च कार्य्य-
कारणभावः । न चैकं पूर्वमपरञ्च । तत्त्वस्य भेदा-
ऽधिष्ठानत्वात् । अनुपाख्यस्य हेतुत्वे प्रागपि सत्त्वप्र-
सक्तौ पुनः सदातनत्वापत्तेः ॥

स्यादेतत् । नाकस्मादिति कारणनिषेधमात्रं वा,

भवनप्रतिषेधो वा, स्वात्महेतुकत्वं वा, निरुपाख्य-हेतुकत्वं वाऽभिधित्सितमपि त्वनपेक्ष एव कश्चिन्नि-यतदेशवन्नियतकालस्वभाव इति, ब्रूमः । निरवधित्वे अनियतावधिकत्वे वा कादाचित्कत्वव्याघातात् । न ह्युत्तरकालसिद्धित्वमात्रं कादाचित्कत्वं, किन्तु प्राग-ऽसत्त्वे सति । सावधित्वे तु स एव प्राच्यो हेतुरित्यु-च्यते । अस्तु प्रागभाव एवाऽवधिरितिचेन्न । अन्येषा-मपि तत्काले सत्त्वात् । अन्यथा तस्यैव निरूपणा-नुपपत्तेः । तथाच न तदेकावधित्वमविशेषात् । इत-रनिरपेक्षस्य प्रागभावस्यावधित्वे प्रागपि तदवधेः कार्य-सत्त्वप्रङ्गात् । सन्तु ये केचिदवधयो, न तु तेऽपेक्ष्य-न्ते इति स्वभावार्थ इति चेत् । नापेक्ष्यन्ते इति को-ऽर्थः । किं न नियताः, आहोस्विन्नियता अप्यनुप-कारकाः ?। प्रथमे धूमो दहनवद्गर्दभमप्यवधीकुर्य्यात्, नियामकाभावात् । द्वितीये तु किमुपकारान्तरेण, नियमस्यैवापेक्षाऽर्थत्वात्, तस्यैव च कारणात्मत्वा-त्, ईदृशस्य च स्वभाववादस्येष्टत्वात् । नित्यस्वभा-वनियमवदेतत् । न ह्याकाशस्य तत्त्वमाकस्मिकमिति सर्वस्य किं न स्यादिति वक्तुमुचितमितिचेन्न । सर्वस्य भवतः स्वभावत्वानुपपत्तेः । न ह्येकमनेकस्वभावं नाम । व्याघातात् । नन्वेवमिहापि सर्वदा भवतः कादाचित्कत्वस्वभावव्याघातइति तुल्यः परिहारः । न तुल्यः । निरवधित्वे अनियतावधित्वे वा कादाचित्क-त्वव्याघातात् । नियतावधित्वे हेतुवादाभ्युपगमात् ॥

तदुभयं निरस्यति ॥ हेतुभूतीति ॥ अथ हेतुभवनयोर्निषेधस्य

शेषाभ्यनुज्ञाफलकत्वात् पर्य्युदासनञा हेतुव्यतिरिक्ताद्भवनं लभ्यते। अहेतुश्च कार्यस्वरूपमवस्तु च तदा स्वानुपाख्यविधिः । तं निषेधति ॥ स्वानुपाख्येति ॥ स्वं कार्य्यम् ॥ अनुपाख्यो निर्द्धर्म्मकोऽलीकः । अथाश्वकर्णादिवदव्युत्पन्न एवायमकस्माच्छब्दः, किंशब्दोऽस्वभावपरो वा । तदा स्वभावादेव कार्य्यस्य कादाचित्कत्वमित्यर्थः । तत्राह ॥ स्वभावेति ॥ सर्वत्र हेतुमाह ॥ अवधेरिति ॥ नियतावधिसम्बन्धित्वेनैव विवादपदस्य कादचित्कस्य कार्यस्य सतर्केण प्रत्यक्षेण विषयीक्रियमाणत्वादित्यर्थः। क्रमेण तर्कमेवाह ॥ हेत्विति ॥ भवनस्य सत्त्वस्याविशेषात् सदातनत्वे कार्य्यस्य कादाचित्कत्वव्याघात इत्यर्थः ॥ भवनेति ॥ भवनस्योत्पत्तेः सदा प्रतिषेधे प्राक् पश्चादिव मध्येऽप्यभवनप्रसङ्गात् कदाचिद्भवनग्राहिप्रत्यक्षबाध इत्यर्थः ॥ उत्पत्तेरिति ॥ स्वोत्पत्तेः पूर्वं यदि स्वं भवेत्, तदा नियतकालोत्पत्तौ हेतुः स्यात् ॥ न चैवम् । असतोऽपि हेतुत्वे प्राक् पश्चादपि कार्य्यसत्त्वप्रसङ्गेन तदनुपलब्धिविरोध इत्यर्थः। कार्यकारणयोरभेदे विरोधान्तरमाह ॥ पौर्वापर्य्येति ॥ पटार्थिनः पटमेव नोपाददते,किन्तु तत्पूर्वकालवर्त्तिनस्तन्तूनिति लोकव्यवहारसिद्धकार्य्यकारणभावविरोध इत्यर्थः॥ तत्त्वस्य—पौर्वापर्यस्येत्यर्थः॥अनुपाख्यस्यार्थक्रियाजनकत्वाभावेऽप्यनिग्रप्रसङ्गान्तरमाह ॥ अनुपाख्यस्येति ॥ एतत्पटानुत्पत्तिक्षणो यद्येतत्पटोत्पादकानुपाख्योत्तरक्षणः स्याद् एतत्पटाधिकरणं स्यादित्यर्थः । यद्यपि स्वभावः कार्य्यं तद्धर्म्मो वा । आद्यः, अकस्मादिति निरासेनैव निरस्तः । अन्त्ये धर्म्मस्य कारणत्वमङ्गीकृतमेव । तथापि यथा परमाणुतत्कारणयोरकारणत्वेऽपि स्वभावादेव नियतदेशवृत्तित्वं, यथा वा कारणत्वाविशेषेऽपि पटस्य तन्तुदेशवृत्तित्वं, न तु वेमादिदेशवृत्तित्वमिति स्वभावादेव नियमः । तथा कार्य्यस्याहेतुकत्वेऽपि तत्तत्कारणत्वाभिमतनियतोत्तरकालवृत्तित्वं, न तु कालान्तरवृत्तित्वमिति स्वभावादेव कादाचित्कत्वं स्यादिति शङ्कते ॥ अपि त्विति ॥ ये ये निरवधयो दृष्टास्तेषां नियमेन कादाचित्कत्वस्वभावविरहान्निरवधिकत्वकादाचित्कयोर्विरोधान्निरवधित्वे कादाचित्कत्वस्वभाव एव न निर्वहेदित्यभिप्रेत्य परिहरति ॥ निरवधित्वे इति ॥ अयं क्षणो यद्येतत्पटध्वंसानाश्रयः सन्नेतत्पटप्रागभावाश्रयो न स्यादेतत्पटाऽधिकरणं स्यादिति भाव इत्यन्ये ॥

ननूत्तरकालसंसर्गित्वं कादाचित्कत्वम् । तच्च निरवधित्वेऽप्या-ऽऽकाशवत् स्यादित्यत आह ॥ न हीति ॥ तथा सति घटाकाशयोः कादाचित्कत्वाकादाचित्कत्वलोकव्यवहारविरोध इति भावः । न च सावधित्वेऽपि न हेतुमत्त्वस्वीकारः । पर्य्यायत्वादनयोरित्याह ॥ साव-धित्वे त्विति ॥ नन्वेतावताऽपि प्राचीनोऽवधिः प्रागभाव एव, न तु भावोऽपीति स एव हेतुर्न भाव इति न प्रागभावातिरिक्ते कारणत्वं वर्त्तते इति शङ्कते ॥ अस्त्विति ॥ किं प्रागभावकाले भावस्यासत्त्वादे-वानवधित्वं कार्य्येणानपेक्षित्वाद्वा ? । आद्यं परिहरति ॥ अन्येषाम-पीति ॥ भावानामपि अनन्यथासिद्धान्वयव्यतिरेकवत्तया प्रागभाव-तुल्यत्वादवधित्वमन्यथा प्रागभावस्यापि तन्न स्यादितिभावः । अन्य-थेति ॥ अनिरूपितस्य प्रागभावस्य प्रतिपादयितुमशक्यत्वादवश्यं घटादिप्राक्कालेऽनन्यथासिद्धान्वयव्यतिरेकिणः कपालादयस्तन्निरूप-काः स्वीकार्य्या इत्यर्थः । ननु प्रागभावनिरूपकस्य चक्षुरादेर्न कारण-त्वं यथा तथा तन्निरूपकभावान्तरस्याऽपि । न च प्रागभावः प्रति-योगिसमवायिकारणमात्रनिरूप्यस्तच्च कारणमेवेति युक्तम् । शब्दा-ऽभावप्रत्यक्षतायां तस्य निरस्यत्वात् । मैवम् । चक्षुरादेरधिकरणग्रह एवान्यथासिद्धत्वात् । चक्षुरादिव्यापाराभावेऽप्यनुमितेऽधिकरणे प्रागभावप्रतीतेरिति भावः । अत्रैवार्थे कादाचित्कत्वव्याघातं प्रागुक्तं विपक्षबाधकं स्मारयति ॥ इतरेति ॥ यद्ययं घटः प्रागभावान्यावधि-को न स्यात् सकलकालीनः स्यादित्यर्थः । द्वितीयं शङ्कते ॥ सन्त्विव-ति ॥ प्रागभावादन्येषाम् अवधित्वेऽपि तैर्घटादिसत्ताया अनियमना-न्न तानि कारणानीत्यर्थः ॥ प्रथम इति ॥ ननु यो दहनव्यभिचारी स रासभानन्तरं भवतीत्यत्रापादकाभावः । स्वयमपि व्याप्तेरनभ्युपगमा-त् । न च धूमत्वं यदि दहनव्यभिचारिवृत्ति स्याद् दहनासमवहित-सामग्र्युत्तरकालोत्पत्तिकवृत्ति स्यादित्यर्थः । परस्येष्टापत्तेः । मैवम् । धूमो यदि रासभसमवधानोत्पत्तिकतावच्छेदकरूपवान् स्याद् रासभ-समवधानानन्तरोत्पत्तिकः स्यात् । धूमत्वं वा यदि दहनव्यभिचारि-वृत्ति स्याद् दहनासमवहितदेशवृत्ति स्याद् इत्यापादनार्थत्वात् । वस्तुतो यद्यग्निर्धूमकारणं न स्यात्, तदा कथं धूमार्थी नियमतो-ऽग्निमुपादेत्त, न रासभमिति तद्ग्राहि प्रत्यक्षव्याघात इति भावः ॥ द्वितीये त्विति ॥ न ह्युपकारव्याप्ता कारणता येन तदभावे न स्यात् ।

उपकारेऽपि कर्त्तव्ये उपकारान्तरापेक्षयाऽनवस्थितेः । किन्तु स्वरूपविशेषव्याप्ता, तन्निवृत्तावेव निवर्त्तते इत्यर्थः ॥ नियमस्यैवेति ॥ नियतान्वयव्यतिरेकवज्जातीयस्यैवापेक्षणीयपदवाच्यतया लोकप्रसिद्धत्वादित्यर्थः ॥ नित्यस्वभावेति ॥ यथा नित्यस्याकाशस्य यः स्वभावो धर्मः शब्दाश्रयत्वमात्मनश्चात्मत्वमाकस्मिकमिति सर्वस्य तदन्यस्याऽपि धर्मः कुतो न स्यादिति न वक्तुमुचितमप्रामाणिकत्वात् । तथा आकस्मिकत्वाविशेषेऽपि सदातनत्वमाकाशादीनां, कादाचित्कत्वं घटादीनां स्वभावो, न त्वन्यस्य धर्मोऽन्यस्येत्यर्थः । यथाऽऽहुः—

नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन ।
विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥
वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
केनेदं रचितं तस्मात् स्वभावात्तद्व्यवस्थितिः, इति ॥ न च नियतदेशवन्नियतकालस्वभाव इत्यनेनास्य पौनरुक्त्यम् । पूर्वं हि सापेक्षत्वादित्यत्र यथा परमाणुतत्परिमाणादीनां निरपेक्षत्वेऽपि नियतदेशवृत्तित्वं तथा घटादीनां नियतकालत्वं स्यादित्यप्रयोजकत्वमुक्तम् । सम्प्रति तु कादाचित्कत्वस्वभावो निर्हेतुकः, स्वभावनियतत्वात् । नित्यस्वभाववदिति सत्प्रतिपक्षत्वमुक्तमित्यर्थभेदात् । पूर्वं यन्नियतं तन्न कारणनियम्यं, यथा जातेः क्वाचित्कत्वमित्युक्तम् । सम्प्रति तु स्वभावो न नियम्य इत्युच्यते, इत्यपौनरुक्त्यमित्यन्ये ॥ न सर्वस्येति ॥ एकनियतो धर्मः स्वभाव इत्युच्यते । तद् यदि सर्वस्य सम्भवेत् तदा स्वभावत्वमसाधारणत्वं नोपपद्यते सत्तादेरिवेति स्वभावत्वव्याघात इत्यर्थः ॥ नन्वेवमिति ॥ यथाकाशस्याकाशत्वं न सर्वस्य तत्त्वव्याघातादिति विपरीतमनाशङ्कनीयं, तदा कादाचित्कत्वस्वभावस्याहेतुकत्वे सदातनत्वमप्यनाशङ्कनीयम् । कादाचित्कत्वस्वभावभङ्गप्रसङ्गादित्यर्थः । कादाचित्कत्वस्वभावसिद्धौ तद्विपरीतकल्पनायां व्याघातः स्यात् । तत्सिद्धिश्च निरवधित्वस्वभावत्वे वा सावधित्वस्वभावत्वे वा प्रकारान्तराभावात् । द्वितीयेऽप्यनियतावधित्वे तद्विपर्यये वा । तत्र प्रथमद्वितीययोराह ॥ निरवधित्व इति ॥ ये ये निरवधयोऽनियतावधयश्च भावा दृष्टास्तेषां नियमतः कादाचित्कत्वस्वभावविरहाद् निरवधिस्वभावस्य अनियतावधिस्वभावस्य वा कादाचित्कत्वस्वभावविरोधः । न हि विरुद्धयोरुष्णशीतयोरेकस्वभावत्व-

म् । तथा च कादाचित्कत्वव्याघातस्तत्स्वभावत्वव्याघात इत्यर्थः ॥

तृतीयमाशङ्क्य सम्प्रतिपत्तिमुत्तरमाह ॥ नियताऽवधित्व इति ॥ वस्तुतोऽस्मिन् सतीदं भवति, असति न भवतीति प्रत्यक्षेण नियतपूर्वभावस्य ग्रहात् प्रत्यक्षमेव कारणत्वे मानम् । तस्य चानन्यथासिद्धत्वग्राहकस्तर्कः, स्यादेवेत्यादिना दर्शित इति रहस्यम् ॥

ननु कादाचित्कत्वं सापेक्षनिरपेक्षाभ्यां व्यावृत्तत्वेनासाधारणम् । तथा हि । न सामग्रीनिरपेक्षं कार्यं, सदातनत्वापत्तेः । नापि तत्साऽपेक्षं, सामग्र्यपि हि न तन्निरपेक्षा । तत्सदातनत्वे तत्कार्यसदातनत्वापत्तेः । नाऽपि तत्सापेक्षा, अनवस्थानात् । ततः प्रागभाववद् यथा सामग्री निरपेक्षाऽपि कदाचित्की तथा भावोऽपि घटादिः स्यादित्याशयवानाह—

स्यादेतत् । उत्तरस्य पूर्वः पूर्वस्योत्तरो मध्यमस्य उभयमवधिरस्तु । दर्शनस्य दुरपह्नवत्वात् । त्वयाऽप्येतदभ्युपगन्तव्यम् । न हि भाववदभावेऽप्युभयाऽवधित्वमस्ति । तद्भावेष्वप्यनुपलभ्यमानैककोटिषु स्यात् । न स्यात् । अनादित्वात् ॥

प्रवाहोऽनादिमानेष न विजात्येकशक्तिमान् ॥
तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः ॥ ६ ॥

प्रागभावो ह्युत्तरकालावधिरनादिः, एवं भावोऽपि घटादिः स्यात् । अनुपलभ्यमानप्राक्कोटिकघटादिविषयं नेदमनिष्टमिति चेन्न । तावन्मात्रावधिस्वभावत्वे तदऽहर्वत् पूर्वेद्युरपि तमवधीकृत्य तदुत्तरस्य सत्त्वप्रसङ्गात् । अपेक्षणीयान्तराभावात् । एवं पूर्वपूर्वमपि । भावे, तदेव सदातनत्वम् । तदहरेवानेन भवितव्यमित्यस्य स्वभाव इति चेन्न । तस्याप्यहः पूर्वन्यायेन पूर्वमपि सत्त्वप्रसङ्गात् । तस्मात् तस्यापि तत्पूर्वकत्वमेवं तत्पूर्वस्यापीत्यनादित्वमेव ज्यायो, न त्वपूर्वानुत्पादे कस्यचि-

वेति विकल्पद्वयं पर्य्यवस्यति । तच्च दूषितमेव । किञ्च, धर्म्मविकल्प पक्षे प्रयत्नादेः शब्दधर्म्मत्वाभावाद्विरोध इति भावः ।

स्वविषयज्ञाने, सङ्गतिग्रहरूपशब्दव्यापारतया अभिहिते इत्यर्थः । १२३.२२.
प्रकृतेऽपीति विषयतया कथञ्चित् लिङ्गवद्धेतुत्वादिति मूलएवोक्तत्वादित्यर्थः ।

तदेव दर्शयितुं शङ्कते नन्विति । ११३.२५.

अपुरुषार्थत्वादिति पुरुषार्थसुखादिप्रतिसन्धानं विना प्रवृत्त्यभावादिति भावः । १२४.२.

यत्प्रतीयमानमिति इष्टसाधनत्वादिकमित्यर्थः । १२४.११.

ननु चिकीर्षाजकृतिसाध्यत्वाभावेऽपि जीवनयोनिकृतिसाध्यत्वं स्यादित्यत आह जीवनेति । १२५.१३.

इच्छायान्त्विति । चिकीर्षायामित्यर्थः । तथाचेच्छाज्ञानस्य प्रवर्त्तकत्वप्रसङ्गोवारितएव, कृतौ स्वरूपसदिच्छायाएव हेतुत्वाभ्युपगमादिति भावः । वस्तुतश्चिकीर्षाहेतुज्ञानस्यैव प्रवर्त्तकत्वमितीच्छाज्ञानस्य चिकीर्षाहेतुत्वे प्रवर्त्तकत्वापत्तिरिति प्रथमकल्पएव साधुरिति । १२५.३०.

यद्यपि बलवदनिष्टाजनकत्वं कृतौ विशेषणीकृतं प्राक्, तथापि चिकीर्षाविशेषणत्वेऽपि न दोषइत्याशयवानाह बलवदनिष्टाजनकचिकीर्षाधीनत्वमिति । वस्तुतो बलवदनिष्टाजनकत्वे सति चिकीर्षाधीनत्वमित्यर्थः । तथाच न पूर्वविरोधः, क्वचित्तु वलवदनिष्टाजनकचिकीर्षाजन्ययत्नचिकीर्षाधीनत्वमिति पाठः । तत्र बलवदनिष्टाजनकचिकीर्षाजन्ययत्ने यच्चिकीर्षाधीनत्वमुक्तरूपं, तदेव विशेषणमिति योजनया तादृशार्थलाभ इत्याहुः ।

ननु यागस्येव कृतेरपीष्टसाधनत्वं धर्मइति तुल्यमेवान्तरङ्गत्वमत आह जीवनयोनिजेति । यद्यपि तद्व्यावर्त्तकं चिकीर्षाधीनत्वमात्रं न तु बलवदनिष्टाजनकत्वमपि, तथापि मधुविषसंपृक्तान्नभोजनव्यावृत्त्यर्थं तदावश्यकमिति भावः । १२६.४.

भोगेति तस्य स्वतः पुरुषार्थत्वेनेष्टसाधनत्वाभावादित्यर्थः ।

वस्तुत इति यदा कदापीत्यर्थः । १२६.८.

कृतिसाध्यतोत्तीर्णेति सिद्धत्वज्ञानादित्यर्थः । अन्यथा साधनत्वस्यैवाग्रहादिति भावः । शेषं शब्दप्रकाशे प्रपञ्चितमनुसन्धेयम् ।

१२७.१६. अतएवेदं मत्तोऽभूतमित्यत्राकारप्रश्लेषः, अभवनस्य प्रागभावरूपत्वादित्यर्थः। अतएव कचित् मत्तो न भूतमित्येव पाठः।

१३०.१९. भावनाया इष्टसाधनतयेति यद्यपि भावनाकारणं न यागः प्रत्युत भावनैव यागजनिका, तथापि तत्कारणेत्यत्र बहुव्रीहिः, कारणपदेन विषयविवक्षा वेति भावः।

१३०.२२. तत्रादिपदेनेति न च तदर्थइत्यस्य पूर्वं लिङर्थइति विवरणाद्यागस्य च लिङर्थत्वाभावाद्विरोध इति वाच्यम्। लिङर्थत्वेन तस्यापि विकल्पे दोषाभिधाने दोषाभावादित्यर्थः। तदर्थइत्यत्र तच्छब्देन शब्दस्यैव विवक्षा, उपस्थितत्वात्। न लिङः, अनुपस्थितत्वात्। प्रकाशे च लिङर्थइति विवरणं भावनामात्राभिप्रायेणेत्याहुः।

१३१. ६. तृतीयोपयोगइति तृतीयासम्भवइत्यर्थः। कारणसङ्ख्याया अनभिहितत्वादिति भावः।

नन्वेवं तृतीयया कारणत्वस्याभिधानात् लिङाऽपि च तदभिधाने पौनरुक्त्यमित्यत आह तृतीयातोऽपीति। गौरवादुक्तदोषाच्चेति भावः। वाजपेयाधिकरणन्यायात् कर्मनामधेयतया तृतीयायाः प्रथमं मूकत्वादित्यन्ये।

परिसङ्ख्यानमित्यभिधानपर्य्यायएव अन्यस्य दुर्वचत्वादित्यनु-

१३१.१०. शयमाविष्करोति इत्यन्ये इति।

१३४.२६. यद्यपीति तथाच नोक्तव्याघातः, वाच्यवाचकभावसम्बन्धात्मकाभिधापक्षएव तत्सम्भवादिति भावः।

१३५.१२. यावज्जीवमिति न च तत्सम्भवति, सुषुप्त्यादिदशायां तद्विच्छेदादिति भावः।

ननु प्रवृत्तिमतोनिवृत्तिनियोगाधिकारात् प्रसङ्गः प्रवृत्तिः न तु

१३५.१७. सङ्कल्पइत्यत आह इच्छायाएवेति। आद्या प्रवृत्तिरिच्छैवेत्यभिधानादिति भावः।

अत एव न हि कर्त्तव्यत्वस्येष्टसाधनत्वस्य वा अभावः प्रतिपा-

१३७.१४. दयितुं शक्यते इति वक्ष्यतीत्याह न हीति।

१३७.१०. समासएवेति यद्यपि न घटः पटइत्यादौ व्यासेऽपि पर्युदासवृत्त्या तदितरपरत्वमस्त्येव, तथापि शब्दप्रकाशोक्तमनुसन्धेयम्।

यागोमदिष्टसाधनमित्याद्यनुमानं शब्दप्रकाशे विपञ्चितमनुसन्धेयम्।

हेतुत्वादित्यादेश्चेति हेतुत्वादनुमानाच्चेत्यादेश्चेत्यर्थः । १३८.२०.

साक्षात्त्वस्यौत्सर्गिकत्वेनेति यथा च कार्यान्वितव्युत्पत्त्या साक्षात् कार्यान्वितज्ञानं नान्वितव्युत्पत्या, तथा शब्दप्रकाशे अनुसन्धेयम् । १४१.६.

ननु सायुज्यं संयोगः, स च परमेश्वरेण शरीरस्य सर्वदा अयत्नासिद्धएव, आत्मनस्तु न कदाऽपीत्यन्यथा व्याचष्टे सायुज्यमिति । १४२.१६.

एतद्वेदवाक्येति समानकालपदेन स्थूलकालोपाधेर्विवक्षणात् पूर्वकालएव विवक्षितः । समानकालोत्पत्तिकस्य जनकत्वासम्भवेन तदादायार्थान्तरादिशङ्काऽनवकाशात् एवञ्चाध्यापकादिज्ञानजन्यत्वेनार्थान्तरवारणायाजन्यान्तम् । न चैवमप्यसिद्धिः तादृशपदज्ञानादिजन्यत्वादिति वाच्यम् । समानविषयत्वेनापि ज्ञानविशेषणात् । न चैवमपि वाक्यार्थं ज्ञात्वा अस्मदादिनैवोच्चरिते इदानीन्तनवेदे दोषतादवस्थ्यमिति वाच्यम् । तद्भिन्नवेदस्यैव पक्षत्वादित्याहुः । यद्यपि सोत्पत्तिकतादृशज्ञानाजन्यत्वविशेषणादेव पक्षधर्मताबलादजन्यज्ञानसिद्धाविष्टसिद्धिः, तथाप्यन्यकालोत्पत्तिकस्य जनकत्वशङ्कैव नेति स्वरूपतानिर्वचनपरं तदिति मन्तव्यम् । न च शुकादिवाक्ये व्यभिचारः, तस्यापि पक्षसमत्वादिति भावः । १४४.२४.

वक्तरीति न च वक्तृत्वानुवक्तृत्वयोर्भेदादनुवक्ता न वक्तेति न तद्विशेषणमर्थवदिति वाच्यम् । वक्तृत्वं हि वचनकर्तृत्वं, तच्च तत्रापि । आगन्तुकेति तथा च कठादिशरीरमधिष्ठायाद्यवक्तुरीश्वरस्यैव तत्तत्समाख्याविशेषे निबन्धनत्वमिति भावः ।

व्यवस्थाव्यतिरेक इति नियमगर्भस्योक्तनियामकस्यासिद्धेरिति भावः ।

अनित्यज्ञानवदिति तन्मते अपौरुषेयत्वात् अस्मन्मते नित्यज्ञानवद्वक्तृकत्वादुभयसिद्धविशेषणमिति बोध्यम् । शेषं सुबोधम् ।

इति महामहोपाध्यायदेवदत्तात्मजश्रीरुचिदत्तोपाध्यायविरचितः कुसुमाञ्जलिप्रकाशमकरन्दः समाप्तः ।

# सूचीपत्रम् ।

—:०:—